# अस्माकं महान् देशः सनातनी संस्कृतिः च ।

भारतभूमिः एषा सुविशाला ।

अस्याः भौगोलिकसीमायाम् एकत्र उत्तुङ्गशिखरः मेघस्पर्शी हिमालयः विराजते । अपरत्र चलत्तरङ्गः रत्नाकरः सागरः पादौ क्षालयति ।

भारतस्य उत्तरेण हिमालयः अस्ति, दक्षिणेन मीनाक्षीमन्दिरम् अस्ति, पश्चिमदिशि अजन्ता-एल्लोरगुहाः विराजन्ते, पूर्वदिशि वाणिज्यकेन्द्रं कलकत्तानगरं विराजते । किम् एते केवलं तत्तत्प्रदेशस्य सम्पत्तयः ? भौगोलिकपरिस्थितिः एतादृशान् प्रदेशान् भारतस्य अन्यभागतः पृथक्करोति ?

भारते बह्व्यः नद्यः एकत्र कोणे समुद्भूताः अनेकान् भूभागान् प्लावयन्त्यः गन्तव्यं स्थानं प्राप्नुवन्ति । एतासां नदीनाम् उपरि किं तत्तद्देशीयानां केवलम् अधिकारः ? किं गङ्गा केवलम् उत्तरखण्डस्य मूलधनम् ? कृष्णा-तपती-कावेरी-नर्मदा-इत्यादयः किं परस्परं मेलनं न सहन्ते ?

एतेषां सर्वेषां प्रश्नानाम् उत्तरं नकारात्मकम् एव । या प्राकृतिकसम्पत्तिः उत्तरदेशे अस्ति तस्याः उपरि उत्तरदेशीयानामिव इतरेषाम् अपि अधिकारः अस्ति एव । एवम् एव इतरत्र अपि । विभिन्नप्रदेशेषु स्थितायाः सम्पदः उपरि सर्वेषां भारतवासिनां समानः अधिकारः । अत्र कारणम्- भौगोलिकता, धर्माचरणं, सामाजिकरीतयः, सम्प्रदायः इत्यादिषु भिन्नेषु सत्सु अपि शरीरम् एकम् अखण्डम् अस्ति । तच्च शरीरम्-भारतम् !

भारतीयैकात्मतायाः पोषणम् अस्माकं प्रथमं कर्तव्यम् । भेदरूपमौक्तिकैः निर्मितः एषः हारः अस्माभिः कण्ठे धारणीयः । अत्र एव अस्माकं गौरवं, देशस्य हितं, भारतीयसंस्कृतेः विकासः च निहितः । आगच्छन्तु, वयम् अपि दृढनिश्चयाः अस्मिन् कार्ये सङ्गताः भवेम ।



# चन्दमामा

जनवरी – १९८५

*

## अन्तरङ्गम्



*

प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः'
सञ्चालकः 'नागिरेड्डी'

विद्वत्परीक्षायाम्, आचार्यपरीक्षायां, एम्. ए. परीक्षायां उत्तीर्णाः वा, एवमेव अन्यासु उन्नतसंस्कृतपरीक्षासु उतीर्णाः वा निरर्गलं शुद्धं च संस्कृतेन सम्भाषितुं शक्ताः न भविष्यन्ति। अत्र किं कारणम्? प्रमुखं कारणम् इदमेव यत् सर्वत्र कक्ष्यासु संस्कृत-माध्यमेन न पाठयन्ति। विद्वदादिपरीक्षासु यद्यपि संस्कृत-माध्यमेन उत्तराणि लिख्यन्ते, तथापि कक्ष्यासु पाठनं चिन्तनं च प्रादेशिकभाषया एव प्रवर्तते। एम्. ए. इत्यादिपरीक्षासु च संस्कृतेन एव लेखनीयम् इति नियमः अपि नास्ति।

अतः पठने पाठने परीक्षायां च संस्कृतमाध्यमम् अनिवार्यं भवेत्। समग्रः संस्कृतविद्यालयः संस्कृतविभागः च संस्कृतवातावरणमयः भवेत्।

संस्कृतमयवातावरणेन प्रभाविताः बालकाःसंस्कृतेन निरर्गलं वक्तुं प्रभवन्ति। संस्कृतेन चिन्तनं कर्तुम् अपि शक्नुवन्ति। विशेषेण आत्मविश्वासं प्राप्नुवन्ति।

सम्पुटः–१ जनवरी-८५ सञ्चिका–१०

प्रतिकृतिमूल्यम रू. २/- वार्षिकं ग्राहकशुल्कम् रू. २४/-





## न्यायधीशस्य आत्मविमर्शः

न्यूमेक्सिको देशस्य शाण्ठफी न्यायालयस्य प्रधानः न्यायाधीशः कदाचित् पञ्चनिमेषात्मकेन विलम्बेन न्यायालयम् आगतवान् । एतत्कारणतः सः पञ्चाशत्डालरात्मकेन दण्डेन आत्मानं दण्डितवान् ।

## जलकन्यकाः सन्ति किम् ?

न्यूगिनी देशस्य समुद्रतटवासिनां विश्वासः यत् समुद्रे जल-कन्यकाः जलपुरुषाः च सन्ति इति । उपरिभागे मानवरूपिणः अधोभागे मीनरूपिणः एतान् प्राणिनः ते जनाः 'रि' नाम्ना आह्वयन्ति । एतादृशान् विचित्रप्राणिनः दृष्टवद्भिः बहुभिः जनैः सह वर्तालापं कृतवान् वर्जीनिया विश्वविद्यालयीयः राय् वाग्नर् महोदयः । मानवशास्त्री अपि एषः इदानीं जलमानवाः सन्तीति विश्वसिति ।





## सौरशक्त्या रिक्षायानम्

'सौरशक्ते उपयोगः केन केन प्रकारेण स्वीकर्तुं शक्यते ?' इति विषये भारतीयविज्ञानिनः संशोधनानि प्रयोगांश्च कुर्वन्तः सन्ति । एतस्य फलरूपतः एव विज्ञानिनः सौरशक्त्या चालयितुं शक्यस्य रिक्षायानस्य निर्माणे सफलतां प्राप्तवन्तः ।

## भवन्तःजानन्ति वा ?

१. कस्य देवालयस्य द्वारमार्गः 'प्रपञ्चे एव अति-दीर्घः' इति ख्यातः ?

२. अस्माकं देशे शिलानिर्मिता अत्युन्नता मूर्तिः कुत्र अस्ति ?

३. अस्माकं देशे कस्य देवालयस्य निर्माणम् एकस्य मुग्धबालकस्य मरणकारणं जातम् ?

४. 'अरबसागरस्य राज्ञी' इति नाम्ना किं नौका-स्थानम् प्रसिद्धम् ?

( उत्तराणि ६४तमे पृष्ठे )



# प्रतिभाप्रदर्शनम्

पुरा ललितसेनराजः प्लवङ्गराज्यं पालयति स्म। सः महान् कविपोषकः इति ख्यातः आसीत्। तस्य आस्थाने पञ्चरत्नानि इति प्रसिद्धाः पञ्चकवयः शोभन्ते स्म। तेषां पञ्च–रत्नानां विषये महाराजस्य अपरिमितविश्वासः, अभिमानः, गौरवं च आसन्। अतः सः एकं विशेषनियमम् एव परिकल्पितवान्। यः कोऽपि वा नूतनकविः राजदर्शनतः पूर्वं पञ्चरत्नकवीनां दर्शनं प्राप्य, तेषां मनांसि तर्पयित्वा, तदनन्तरम् एव राज्ञः दर्शनार्थम् आगच्छेत् इति।

एकदा सायङ्काले ललितसेनः सचिवेन सह राजोद्याने विहरन् राजकार्यसम्बन्धिवार्तालापे मग्नः आसीत्। तदा पञ्चरत्नानां अनुमतिं प्राप्य द्वौ कवी राजदर्शनार्थं तत्र आगतवन्तौ।

अनन्तरम् महाराजस्य आज्ञानुसारेण तौ महाराजस्य. तस्य शासनक्रमस्य च श्लाघनपराम् एकैकाम् आशुकवितां विरचय्य गीतवन्तौ। स्वरचितानि अन्यानि अपि पद्यानि महाराजस्य पुरतः पठित्वा प्रदर्शितवन्तौ।

ललितसेनः असहनां प्रकटयन् तत् कवि-द्वयं दृष्ट्वा "एकैकस्मै पञ्चाशत् दीनारान् दत्त्वा प्रेषयतु" इति पार्श्वस्थितं सेवकम् आदिष्टवान्।

तेषां गमनानन्तरं ललितसेनः सचिवम् "एतस्य कविद्वयस्य कवितानां श्रवणानन्तरं कवित्व-शक्तेः कीदृशः ह्रासः जातः अस्ति इति ज्ञातुं शक्यते। किन्तु वराकौ रिक्तहस्तौ न प्रेषणीयौ इति चिन्तितम्" इति उक्तवान्।

महाराजस्य वचनानि श्रुत्वा मन्त्री मुकुन्द-वर्मा किमपि अनुक्त्वा तूष्णीं स्थितवान्।

किञ्चित्कालानन्तरं पुनः ललितसेनः "किञ्चित् लेखनीग्रहणसामर्थ्यम् अस्ति चेत् तेनैव आत्मानं महाकविं मन्यमानाः एते यथेच्छं लेखितुम् आरभन्ते। अस्माकम् आस्थानम्



अलङ्कर्तुं योग्यान् प्रतिभाशालिनः एव प्रेषयन्तु इति पञ्चकविरत्नानि अहं सूचितवान् आसम्'' इति खेदभावेन उक्तवान् ।

''सत्यम्, एतं विषयम् अस्माकं राज्ये सर्वे जानन्ति महाराज ! तथापि ते पञ्चकवयः एतादृशजनान् कुतः भवतः समीपं प्रेषयन्ति इति ते एव न जानीयुः ' इति मन्दस्वरेण मन्त्री उक्तवान् ।

सचिवस्य वचने किमपि गूढरहस्यम् अस्ति इति ललितसेनः तर्कितवान् । ''तस्य एतदेव कारणं यत् एतादृशजनैः राजम्माननं न लभ्यते तर्हि तस्य कारणीभूताः एते पञ्चकवयः एव इति अपवादः भवेत् । अतः ते एतान् प्रेषयन्ति इति मन्ये । यद्यपि एतत् अस्माकं पञ्चकविरत्नानां पक्षपातरहितगुणस्य निदर्शनं स्यात्, तथापि मम तु एतेन महान् क्रोधः ।'' इति उक्तवान् ललितसेनः ।

मन्त्री मुकुन्दवर्मा मन्दं हसन् ''अस्माकं प्लवङ्गराज्ये प्रतिभावतां कवीनाम् अभावः नास्ति । किन्तु ते सर्वे भवतः दर्शनं प्राप्तुं नैव शक्नुवन्ति'' इति उक्तवान् ।

ललितसेनः तीक्ष्णदृष्ट्या सचिवं पश्यन् ''पञ्चकविरत्नानां विषये भवतः अविश्वासः अस्ति इति प्रतिभाति । महाकवीन् मम दर्शनतः ते वारयन्ति इति भवतः अभिप्रायः वा ?'' इति उक्तवान् । मुकुन्दवर्मा तूष्णीं स्थितवान् ।

कतिपयदिनानन्तरं **विशाखः** नाम कविः महाराजस्य दर्शनार्थम् आगतवान् । सः स्वीयकाव्यस्य कांश्चन अंशान् महाराजस्य पुरतः पठित्वा प्रदर्शितवान् ।

ललितसेनराजः विशाखकवेः प्रतिभां दृष्ट्वा मुग्धः जातः । ''बहु समीचीनम् अस्ति । कविता नाम एषा एव । नूनं भवान् महाकवीनां पङ्क्तौ स्थातुम् अर्हः। किन्तु एतावत्दीर्घकाला-नन्तरं भवतः परिचयः जातः इति एतत् मम दौर्भाग्यम् एव'' इति उक्त्वा पार्श्वस्थितं सचिवं ''पश्यतु भोः, अस्माकं पञ्चकविरत्नानि कवीन् राजदर्शनतः निवारयन्ति इति भवतः संशयः आसीत् किल ? यदि सः यथार्थः अस्ति, तर्हि विशाखसदृशः महाकविः मम दर्शनार्थं

कथं आगच्छति स्म ?" इति पृष्टवान् ।

मन्त्री विशाखं दृष्टवान् । तदा विशाखः महाराजं दृष्ट्वा "महाप्रभो ! अहं प्रतिभावान् कविः इति पञ्चकवयः न जानन्ति । अस्मिन् विषये साहाय्यं कृतवन्तं सचिवं प्रति अहं कृतज्ञः अस्मि । किन्तु अहं पञ्चकवीनाम् अनुमतिम् अप्राप्य, भवतः नियमम् उल्लङ्घ्य भवतः दर्शनार्थम् आगतवान् इत्यपि न" इति उक्तवान् ।

ललितसेनराजः आश्चर्येण सचिवस्य मुखं दृष्टवान् । तदा सचिवः विनयेन 'प्रभो, कवीनां प्रतिभायाः परीक्षकः सम्मानकर्ता च भवान् एव । एवं हि सति, ततः पूर्वं पञ्चकवीनां पुरतः प्रज्ञाप्रदर्शनस्य का आवश्यकता ? एषा शङ्का अस्माकं राज्ये कस्य अपि महाकवेः मनसि न उत्पन्ना इति प्रतिभाति । ते प्रथमं पञ्चकवीनां दर्शनं कुर्वन्ति । पञ्चकवयः तु, स्वापेक्षया अपि उत्तमतमाः इति यदा मन्यन्ते तदा तान् राजदर्शनतः वारयन्ति । एतां वस्तुस्थितिम् अहं जानामि । तथापि एतत् वक्तुं कालं निरीक्षमणः आसम्" इति उक्तवान् ।

"कथं कथम् ? एवं भवति वा ?" इति ललितसेनराजः आश्चर्येण पृष्टवान् ।

मन्त्री विशाखं निर्दिश्य "एषः महाकविः इति भवान् परीक्षितवान् किल ? अस्य विषयं वदामि । कृपया श्रुणोतु । एतस्य गुरुः विकीर्णनामकः पण्डितः । किञ्चित्कालपूर्वं सः एतं मम समीपम् आनीय 'एषः महाराजस्य



आस्थानम् अलङ्कर्तुम् अर्हः महाकविः। पञ्चकविरत्नानां सम्पर्कं विना एतस्य राजदर्शनं कारयतु'' इति प्रार्थितवान्। किन्तु नियमम् उल्लङ्घयितुं न शक्यते इति अहम् उक्तवान्।

''एवं तर्हि एषः विशाखः पञ्चकवीनां अनुमतिम् अप्राप्य एव अत्र आगतवान् खलु?'' इति कुतूहलेन पृष्टवान् महाराजः।

तत्क्षणमेव विशाखः ''न हि प्रभो, अहं पञ्चकवीनाम् अनुमतिं प्राप्य एव अत्र आगतवान्। किन्तु तेषां पुरतः मम कविताशक्तेः पूर्णतया प्रदर्शनं न कृतवान्, तावदेव।

अभ्यासससमये मया रचितं साधारणं कविताद्वयं तेषां पुरतः पठितवान्। पूर्णतया प्रज्ञाप्रदर्शनं करोमि चेत्, भवतः दर्शनभाग्यं न लभ्यते इति अन्येषां कवीनाम् अनुभवं दृष्ट्वा अहं ज्ञातवान्। अतः एव अहं सामान्यकविः इव अभिनयं कृतवान्। तदा शीघ्रमेव भवतः दर्शनार्थम् अनुमतिं लब्धवान्'' इति विनयेन उक्तवान्।

महाराजः महता क्रोधेन ''अस्माकं पञ्चकविरत्नेषु प्रतिभा नास्ति इति न अहं वदामि। किन्तु तेषां हृदयेषु एतादृशं मात्सर्यं दृष्ट्वा महान्तं खेदम् अनुभवामि। अस्माकं राज्ये स्वापेक्षया उत्तमतमः कविः एव नास्ति इति मां वञ्चयितुं ते इच्छन्ति इति सिद्धम् अभवत्। कीदृशी क्षुद्रता'' इति उक्तवान्।

''सत्यं प्रभो! भवतः अभिप्रायः यथार्थः एव अस्ति। पूर्वम् एकवारं सर्वथा कविताशक्तिहीनं कविद्वयं ते राजोद्यानं प्रेषितवन्तः आसन्। भवान् स्मरति वा?'' इति पृष्टवान् मन्त्री मुकुन्दवर्मा।

ललितसेनः पञ्चकविरत्नानां यथार्थस्वरूपं ज्ञातवान्। सः विशाखम् आस्थानकविं कृतवान्। अनन्तरं पूर्वनियमं परित्यज्य, सर्वे अपि स्वस्य दर्शनार्थम् आगन्तुम् अर्हन्ति इनि उद्घोषणं कारितवान्। कालान्तरे उत्तमकविपोषकत्वेन कीर्तिं प्राप्तवान्।






[अवन्तीनगरं प्राप्तः पिङ्गलः दीनावस्थायां स्थितां स्वमातरं दृष्टवान् । भल्लूककेतुद्वारा कारगारे स्थितौ भ्रातरौ बन्धमुक्तौ कृतवान् । महाराजस्य कोषागारे स्थितं ऐश्वर्यं मन्त्रस्यूतं च आनायितवान् । पिङ्गलस्य आदेशानुसारं भल्लूककेतुः सहचराणां साहाय्येन अपूर्वम् एकं भवनं निर्मातुं निश्चितवान् । अनुचरान् आनेतुं भल्लूकपर्वतं गतवान् च ।]

भल्लूककेतुः स्वकीयैः सहचरैः सह सूर्यास्तसमये अवन्तीनगरं प्राप्तवान् । भल्लूककेतोः मार्गदर्शने भवननिर्माणकार्यम् आरब्धम् । आगतेषु पिशाचेषु केचन आधारभूमिं निर्मितवन्तः । अन्ये केचन स्तम्भान् सज्जीकृतवन्तः ! अपरे केचन शिल्पादिकार्येषु निमग्नाः । इतरे भित्तिनिर्माणकार्यम् आरब्धवन्तः ।

नदीतटे अकस्मात् उत्पन्नं कोलाहलं श्रुत्वा अवन्तीनगरस्य रक्षकभटाः, वस्तुस्तितिं ज्ञातुम् इच्छन्तः नदीतीरम् आगतवन्तः । एवं कुतूहलेन आगतान् बहून् जनान्, भल्लूककेतोः अनुचराः भवननिर्माणकार्ये नियोजितवन्तः । ये भटाः खड्गादिशस्त्रसहिताः आगतवन्तः तादृशान् मुष्टिप्रहारादिना पीडयित्वा प्रेषितवन्तः ।

सूर्योदयतः पूर्वं नवीनं भवनं सिद्धम् । पिङ्गलः मात्रा सहोदराभ्यां च सह तत् भवनं प्रविष्टवान् । सूर्यस्य बालकिरणैः आप्लुतं तत् भवनं सुवर्णजलेन अभिषिक्तम् इव दृश्यते स्म ।



पिङ्गलः भल्लूककेतोः अनुचरेषु पञ्चाशत् जनान् स्वसमीपे स्थातुम् उक्त्वा अन्यान् सर्वान् भल्लूकपर्वताय प्रेषितवान्। भल्लूककेतुः अयःशलाकाभिः निर्मितस्य द्वारस्य पृष्ठभागे एकस्मिन् शिलासने उपविश्य द्वाररक्षणकार्यम् आरब्धवान्।

अवन्तीनगरस्य राजभवने इदानीं महान् कोलाहलः। नगररक्षकदलस्य नायकः भल्लूककेतोः अनुचरैः निर्मीयमाणं भवनं द्रष्टुं गतः, प्रहारम् अनुभूय प्रत्यागतवान् आसीत्। सः धावन् मन्त्रिसमीपं गत्वा सर्वं वृत्तान्तं निवेदितवान्। राक्षसशिल्पिनः एकस्य अभूतपूर्वस्य भवनस्य निर्माणं कुर्वन्तः सन्ति इत्येतां वार्तां मन्त्री न विश्वसितवान् एव।

"अये! भवतः वचनं सर्वथा विश्वासयोग्यं न। सुरापानेन मत्तः भवान् किमपि स्वप्नं दृष्टवान् स्यात्। प्रथमं गृहं गत्वा सम्यक् शयनं करोतु। असम्बद्धं प्रलपन् अस्मान् न पीडयतु। यदि महाराजः एतां वार्तां जानाति तर्हि, सः भवन्तं कारागारे स्थापयिष्यति। जानाति किल एतत्?" इति उक्तवान् मन्त्री।

"मन्त्रिवर्य! मम बुद्धिः अविकला अस्ति। अस्माकं बहवः भटाः इदानीम् अपि तेषां बन्धने सन्ति। राक्षसैः ताडितः अहं कथञ्चित् पलाय्य आगतवान्। अन्ये अपि केचन आगताः सन्ति। यदि मम वचनेषु भवतः विश्वासः नास्ति तर्हि तान् भटान् पृच्छतु। अथवा स्वयम् एव भवनस्य शिखरम् आरुह्य पश्यतु। नदीतीरे निर्मीयमाणं विशालं भवनं दृश्यते" इति उक्तवान् रक्षकदलस्य नायकः।

मन्त्री भवनस्य शिखरम् आरूढवान्। नद्याः तीरे अपूर्वकान्त्या शोभायमानम् एकम् अद्भुतं भवनं तेन दृष्टम्। एतत् दृष्ट्वा मन्त्री स्वकीयनेत्रयोः एव न विश्वसिति। "अहो! अद्भुतं दृश्यम् एतत्" इति उद्गारं प्रकटयन् सः अधः आगतवान्। तावति काले कोशाधिपतिः आक्रोशनं कुर्वन् आगत्य उक्तवान्– "महामन्त्रिन्! वयं वञ्चिताः। कोषागारे स्थिता समग्रा सम्पत्तिः लुण्ठिता। कोषागारम् इदानीं रिक्तम्। एकः दीनारः अपि तत्र न अवशिष्टः" इति।

क्रोधेन ज्वलन् उक्तवान् मन्त्री- "किम् ? कोषागारम् लुण्ठितम् ? तर्हि वराकाः रक्षकाः किं कुर्वन्तः आसन् ? इदानीं एव तान् अत्र आनयतु" इति।

"मन्त्रिवर्य ! अत्र रक्षकाणां कोऽपि दोषः नास्ति। कोषागारस्य द्वारं यथापूर्वं पिहितम् अस्ति। तालेन कीलितम् अपि तथैव अस्ति। अतः मायया एव एतत् प्रवृत्तम् इति अहं मन्ये" इति आकाशं पश्यन् उक्तवान् कोशाधिपतिः।

"हुँ, एतत् सर्वं मायया सञ्जातम्" इति वदन् मन्त्री क्रोधभरितया दृष्ट्या कोषाधिपतिं पश्यन् गर्जितवान्- "मायायाः फलरूपेण भवता मरणदण्डनशिक्षा अनुभोक्तव्या। आगच्छतु इदानीं महाराजस्य समीपम्" इति।

मन्त्री कोषाधिपतिः च यावत् महाराज-समीपम् आगतवन्तौ, तदा कारागृहस्य रक्षणप्रमुखः धावन् आगत्य कम्पमानेन स्वरेण उक्तवान् - "मन्त्रिवर्य ! अनिष्टं संवृत्तम्। जीवदत्तः लक्षदत्तः च अदृश्यतां गतौ" इति।

एतां वार्तां श्रुत्वा मन्त्री एकक्षणं स्तब्धः। अनन्तरं तीक्ष्णदृष्ट्या पश्यन् आक्रोशनं कृतवान्- "किं, जीवदत्तः लक्षदत्तः च अदृश्यतां गतौ ? कथम् एतत् सम्भवति ? किं तौ मायाविनौ ? उत देवतास्वरूपिणौ ? किं प्रलपति भवान् ? " इति।

"तयोः प्रकोष्ठे भूमिखननेन निर्मितः एकः




गुप्तमार्गः दृश्यते। स च बहु विशालः। मानवमात्रेण सः निर्मातुं न शक्यः। अतः एतत् कार्यं कस्याश्चित् देवतायाः, अथवा कस्यचित् राक्षसस्य स्यात्" इति उक्तवान् कारागृहस्य रक्षणाधिपतिः।

इदानीं मन्त्री चिन्तायां मग्नः। "नद्याः तीरे एकस्याम् एव रात्रौ भवननिर्माणम्! रक्षणदलस्य पराजयः! राजभवने विचित्राः घटनाः! एतत्सर्वं मानवमात्रेण न कृतम् एव।" इति सः चिन्तितवान्। जीवदत्तलक्षदत्तयोः सहोदरः पिङ्गलनामकः कश्चित् मान्त्रिकः अस्ति इति मन्त्री स्मृतवान्। "महाराजाय सर्वेषां वृत्तान्तानां निवेदनम् एव वरम्" इति मन्त्री चिन्तितवान्।



यदा महाराजस्य प्रकोष्ठं तेन गतं तदा तत्र अपि कश्चन कोलाहलं प्रचलन्तं प्रत्यक्षीकृतवान्। राजा वदन् आसीत् ''सत्यं वदन्तु। मम समीपे विद्यमानं मन्त्रस्यूतं कः चोरितवान्? यदि केन अपि न अङ्गीक्रियते तर्हि अहं सर्वान् शूलम् आरोपयामि '' इति।

महाराजस्य पुरतः सर्वे पाचकाः हस्तौ बद्ध्वा स्थिताः आसन्।

मन्त्रिणं दृष्ट्वा राजा आदिष्टवान्- ''मन्त्रिवर्य! एतान् सर्वान् हस्तपादौ बद्ध्वा कारागारे स्थापयतु। एतैः मदीयः स्यूतः चोरितः अस्ति'' इति।

''महाराज! स्यूतस्य चौर्यं किं, राजभवने अद्य बह्व्यः घटनाः घटिताः सन्ति'' इति वदन् मन्त्री सर्वाः घटनाः श्रावितवान्।

सर्वं श्रुत्वा क्रोधतप्तः राजा रक्षकप्रमुखम् आदिष्टवान् -''भवान् पञ्चाशत्सैनिकैः सह गत्वा नदीतीरे विद्यमानस्य तस्य भवनस्य अन्तः विद्यमानान् सर्वान् मानवपशून् अत्र आनयतु'' इति।

मन्त्री मध्ये प्रविश्य उक्तवान् -''महाराज! एतद्विषये सावधानं विमृश्य निर्णयः स्वीकरणीयः''।

''किम्? विमृश्य निर्णयः? किं भवान् तस्मै वराकाय एव राज्यं दत्त्वा तस्य मन्त्री भवितुम् इच्छति?'' इति राजा असहनया उक्तवान्।

मन्त्री किमपि उत्तरं न दत्तवान्। किमर्थं राजा एवं कुप्यति इति सः न ज्ञातवान्। तदा रक्षकप्रमुखः उक्तवान्- ''महाराज! अहं पिङ्गलं बद्ध्वा अश्वस्य उपरि आरोप्य आनेष्यामि। अनुमत्या अनुगृह्णातु'' इति।

राजा कोपेन एव उक्तवान्- ''भवान् तं अश्वस्य उपरि वा आनयतु, गर्दभस्य उपरि वा आनयतु। मम उभयम् अपि समानम्। मम तु अपेक्षितः, मन्त्रस्यूतः, धनागारस्य धनं च। तत् द्वयम् अवश्यम आनेतव्यम्। ज्ञातं किल?'' इति।

रक्षकप्रमुखः आयुधसहितान् पञ्चाशत्-सैनिकान् आत्मना सह नयमानः पिङ्गलस्य भवनस्य समीपं गतवान्। मुख्यद्वारस्य पार्श्वे

शिलासने उपविष्टं तन्द्रामग्नं भीकराकृतिं भल्लूककेतुं दृष्ट्वा एव सर्वे सैनिकाः भीताः। ते प्रतिनिवर्तमानाः परस्परम् उक्तवन्तः- "एषः कश्चित् महाराक्षसः इव भाति। एतस्य कर्णौ तु शूर्पाकारौ। अरण्यसूकरः इव दृश्यते एषः" इति।

"रे मूर्खाः! भीतिः मास्तु। अस्मान् भीषयितुम् एषः एवं रूपं धृतवान् अस्ति" इति वदन् रक्षकप्रमुखः स्वकीयम् अश्वम् प्रेरितवान्। भल्लूककेतोः समीपं गत्वा सः शूलायुधेन तं पीडयन् उक्तवान्- "अये, स्थूलोदर! नेत्रे उद्घाटयतु। अत्र पश्यतु- अहं राजपक्षीयः रक्षकप्रमुखः उपस्थितः अस्मि।"




भल्लूककेतुः मन्दं नेत्रे उद्घाटितवान्। पुरतः दृश्यमानं शूलम् आकृष्य रक्षकप्रमुखं हस्ते गृहीतवान्। अनन्तरं तस्य पादौ गृहीत्वा उन्नीय, परितः भ्रामयित्वा सुदूरं नद्यां क्षिप्त-वान्।

एतत् दृष्ट्वा सर्वे राजभटाः "हन्त! मृतः" इति आक्रोशनं कुर्वन्तः ततः धावितवन्तः। धावतः तान् दृष्ट्वा मन्दहासं प्रकटयन् भल्लूक-केतुः आसने उपविष्टवान्। सन्तृप्तः सः पुनः नेत्रे निमीलितवान्।

राजभटाः ये धावितवन्तः आसन्, ते हाहाकारं कुर्वन्तः राजसमीपं गत्वा सर्वं वृत्तान्तं निवेदितवन्तः। एतत् श्रुत्वा क्रोधेन राजा उक्तवान्- "रे भीरवः! एतावन्तः सन्ति भवन्तः! एकम् अटविकं पुरुषं बद्ध्वा आनेतुं न शक्तवन्तः? आत्मानं महावीरं चिन्त-यन्ति भवन्तः। भवतां समीपे किम् अस्त्र-शस्त्राणि न आसन्? बाहुबलं न आसीत् किम्? भीरुतापूर्णव्यवहारस्य एतस्य दण्डनं शूलारोपणम् इति भवन्तः जानन्तु" इति।

तदा मन्त्री अग्रे आगत्य उक्तवान्- "महाराज! शान्तः भवतु। सः अटविकः राक्षसः वा मनुष्य वा इति वयं न जानीमः। तस्य अपूर्वशक्तेः पृष्ठभूमौ किमपि रहस्यं स्यात् एव। तस्य यजमानः पिङ्गलः मान्त्रिकः इति भवान् जानाति एव। अतः एव सः अटविकः, यत्किमपि कर्तुं समर्थः।"

"तदीयः यजमानः पिङ्गलः मान्त्रिकः




भवतु नाम। किन्तु सः अवन्तीनगरस्य महाराजस्य मम अपमानं कर्तुम् अर्हति वा? अहं तदीयं शिरः छेदयित्वा तेन तोरणम् अलङ्करि–ष्यामि'' इति वदन् राजा हस्ततालपूर्वकं सेना-पतिम् आहूतवान्- ''अये सेनापते ! अत्र आगच्छतु।''

''आज्ञापनीयोऽयं जनः'' इति वदन् सेनापतिः महाराजस्य समीपम् आगतवान्।

''पिङ्गलद्वारा निर्मापितं भवनम् उन्मूल्य, तत्रत्यान् सर्वान् वन्दीकृत्य आनयतु'' इति आदिष्टवान् महाराजः।

महाराजस्य आदेशेन सेनापतेः उत्साहः वर्धितः। बहुकालात् युद्धं न आसीत् इति कृत्वा युद्धार्थं तस्य बाहुः स्फुरति स्म। सः चिन्तितवान्- ''नद्याः तटे निर्मितस्य भवनस्य उन्मूलनम् अतीव सुकरम्। तत्र गत्वा सर्वान् सम्यक् पीडयिष्यामि'' इति।

पुनः अन्यः विचारः स्फुरितः- ''पिङ्गलस्य समीपे अल्पा सेना अपि यदि स्यात् तर्हि समीचीनं भवेत्। तदा अहं खड्गयुद्धं, मल्ल-युद्धं, सर्वविधयुद्धम् अपि कर्तुं समर्थः भविष्यामि''इति।

एतदनन्तरं सेनापतिः द्विशतम् आश्विकान् त्रिशतं पदातीन् च स्वीकृत्य दर्पेण ततः निर्गतः। शीघ्रम् एव पिङ्गलस्य भवनस्य समीपं गतवान्। तत्र भल्लूककेतुः निद्रायाः अभिनयं कुर्वन् नेत्रे अर्धं निमील्य सेनापतेः आगमनं परि-शीलयन् आसीत्। सेनापतिः मुख्यद्वारस्य समीपं गत्वा शूलायुधं प्रदर्शयन् भल्लूककेतुं तर्जितवान्- ''रे अटविक मूर्ख ! भवतः स्वामी कुत्र ? उत्तिष्ठतु तावत्'' इति।

निद्रातः जागरणम् अभिनयन् भल्लूककेतुः उत्थितवान्। सेनापतिं पश्यन् उक्तवान् च- ''अरे ! कोऽयं मूर्खः माम् आह्वयति ? भवान् तु न किल ?'' इति।

एतत् प्रश्नं श्रुत्वा सेनापतिः उग्ररूपं धृत-वान्। भल्लूककेतोः उपरि शूलायुधस्य प्रयोगं कुर्वन् अश्वं प्रेरितवान्। यावत् शूलायुधम् उपरि न आपतितं तावति एव काले भल्लूककेतुः पार्श्वे उत्प्लुतवान्। अश्वस्य उपरि उपविष्टं सेनापतिं हस्तेन सलीलं गृहीत्वा

शिलासनस्य उपरि स्थापितवान्। तस्य उपरि उपविष्टवान् च।

अनन्तरं भल्लूककेतुः हस्ततालपूर्वकं सर्वान् अनुचरान् आहूतवान्। तत्क्षणम् एव सर्वे अनुचराः हर्षोद्गारं कुर्वन्तः विविधान् शिलायुधान् गृहीत्वा आगतवन्तः। भल्लूक-केतुः पलायनरतान् सैनिकान् प्रदर्शयन् अनुचरान् आदिष्टवान्-"तान् दर्पयुतान् सम्यक् निष्पीड्य आगच्छन्तु" इति।

भल्लूककेतोः अनुचराः राजपक्षीयानाम् अश्वारोहिणां पदातिनां च उपरि आक्रमणं कृत्वा शिलानिर्मितैः आयुधैः पीडयितुम् आरब्ध-वन्तः। तदा सर्वे सैनिकाः प्राणभीत्या इतस्ततः धावितुम् प्रवृत्ताः। भवनस्य शिखरम् आरुह्य स्थिताः पिङ्गलः, तदीयौ सहोदरौ, माता च एतत् दृश्यं दृष्ट्वा उच्चैः हसितवन्तः।

राक्षसानां प्रहारैः पीडिताः सैनिकाः कथञ्चित् आत्मानं रक्षन्तः राजसमीपं गत्वा सर्वं निवेदितवन्तः। "पिङ्गलः सामान्यः न" इति राजा स्वयं ज्ञातवान्। उद्गच्छन्तं कोपं प्रयत्नेन निगृह्य सः उक्तवान्- "मन्त्रिवर्य! कश्चित् युवकः अस्मान् अपमानयति किल? एतत् अहं सोढुं न शक्नोमि। प्राणान् पणी-कृत्य अहम् एव युद्धार्थं गच्छामि। यदि कदा-चित् युद्धे मम मरणं स्यात् तर्हि मदीयां प्रियपुत्रीं वकुलादेवीं योग्याय वराय दत्त्वा तस्याः विवाहं करोतु" इति।




मन्त्री एकक्षणं विचिन्त्य उक्तवान्-"महाराज! विना कोपं शान्तचित्तः भूत्वा भवान् मया उच्यमानं श्रृणोतु। अहं भवन्तं किञ्चित् निवेदयितुं इच्छामि" इति।

"वदतु नाम" इति उक्तवान् राजा।

"पिङ्गलःयुवकः अविवाहितः च। परिचितानां सकाशात् मया ज्ञातं यत् पिङ्गलः सौन्दर्येण मन्मथः इव अस्ति इति। विभवेन साहसेन पराक्रमेण च सः असदृशः। अतः राजकुमारीं परिणेतुं तं प्रार्थयामः इति मम मतिः। एतेन पर्वतोपमा विपत्तिः अणुरूपेण परिवर्तिता भविष्यति" इति।

एतां सूचनां श्रुत्वा राजा अधिकं कुपितः। सः क्रोधेन उक्तवान्-"किं भवतः बुद्धिः

अकस्मात् विकला सञ्जाता ? येन भवान् ईदृशीं सूचनां सूचयन् अस्ति। शत्रवे मदीयां प्रियपुत्रीं ददामि वा ? आत्मरक्षणार्थं पुत्रीं बलिपीठं आरोपयामि वा ? नैव, एवं कदापि भवितुं न अर्हति" इति

मन्त्री राजानं पुनः बोधितवान्- "राजन् ! मदीयसूचनायाः स्वीकारः त्यागः वा भवदधीनः। किन्तु प्रथमं परिस्थितिं सम्यक् परिशीलयतु इति मदीया प्रार्थना। राजकार्येषु दूरदर्शिता सर्वदा अपेक्षिता। यः अद्य शत्रुः सः एव श्वः हितचिन्तकः भविष्यति कदाचित्। पिङ्गले भवता कः दुर्गुणः दृष्टः ? तदीया माता भ्रातरौ च अस्माभिः पीडिताः। अतः सः एवम् आचरितवान्। वस्तुतः सः राजनिष्ठः एव। राजकुमार्याः पिङ्गलः एव योग्यः वरः इति मम अभिप्रायः। एतयोः विवाहेन, सर्वेषां हितं सिध्यति। अल्पेन विनयेन वयं महान्तं लाभं प्राप्तुं समर्थाः भविष्यामः। एतादृशः समर्थतमः जामाता भाग्यवशात् एव लभ्यते। द्वारसमीम् उपस्थितस्य भाग्यप्राप्तेः अवकाशस्य तिरस्कारः किमर्थम् ? " इति।

राजा किञ्चित्कालपर्यन्तं विचारमग्नः आसीत्। अनन्तरं सः उक्तवान्- "मन्त्रिन् ! भवदीया सूचना अङ्गीकृता मया" इति।

अनन्तरं मन्त्री उचितपरिवारेण सह गत्वा पिङ्गलं दृष्टवान्। महाराजस्य इच्छां उचितैः वचनैः प्रकटीकृतवान्। पिङ्गलः राजकुमार्याः सौन्दर्यविषये पूर्वं श्रुतवान् आसीत्। अतः सः मन्त्रिणः प्रस्तावम् अङ्गीकृतवान्।

अल्पे एव काले पिङ्गलस्य वकुलादेव्याः च विवाहः महता वैभवेन सम्पन्नः। महामान्त्रिकः पद्मपादः विवाहमङ्गले उपस्थाय वधूवरौ आशिषा अनुगृहितवान्।

अनन्तरं केषुचित् वर्षेषु अवन्तीराजः दिवङ्गतः। तदा पिङ्गलः एव राजा जातः। पिङ्गलस्य शासने प्रजाजनाः सुखिनः न्यायनुयायिनः च आसन्।

(समाप्तम्)






# योग्यशिक्षणम्

दृढव्रतः विक्रमः वृक्षस्य समीपं प्रत्यागतवान्। शवं वृक्षतः अवतार्य स्कन्धस्य उपरि संस्थाप्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितः। तदा शवान्तर्गतः वेतालः उक्तवान्- "राजन्! मध्यरात्रे श्मशाने भवान् किं साधयितुम् इच्छन् कठोरपरिश्रमम् आचरति इति अहं न जानामि। भवादृशाः परिश्रमशालिनः बहवः भवन्ति। किन्तु ते परिश्रमस्य अनुगुणं लाभं स्वीकर्तुम् अशक्ताः अपारं कष्टम् अनुभवन्ति। तादृशेषु भवान् अपि अन्यतमः वा? इति मम संशयः। उदाहरणरूपेण अहम् एकां कथां कथयामि। श्रमपरिहारार्थं कथां श्रुणोतु तावत्।"

एवम् उक्त्वा वेतालः कथाम् आरब्धवान्– "गणपतिः नाम एकः सुसम्पन्नः कृषिकः। तस्य सुशान्तः नाम एकः पुत्रः। गणपतेः दारिद्र्यं तु न आसीत् एव। अतः सः चिन्तितवान्- 'पुत्रस्य अध्ययनार्थं सर्वविधव्यवस्थाः करणीयाः' इति। किन्तु यदा सुशान्तः पञ्चवर्षीयः आसीत्

## वेतालकथा



इतोऽप्यधिकं पठितुं, सुशान्तस्य अवकाशः न आसीत्।

सुशान्तः स्वभावेन जिज्ञासुः। प्रकृतिं सुसूक्ष्मं परिशीलयन् सः तदीयकारणानि अन्विष्यति स्म। स्वप्रतिभाद्वारा सः कृषिकार्ये नवीनां पद्धतिम् आविष्कृतवान्। ग्रामीणाः तस्य बुद्धिमत्तायाः प्रशंसां कुर्वन्ति स्म।

यस्मिन् कस्मिन् अपि गृहे या कापि समस्या उद्भवतु, सुशान्तः तत्र गत्वा परिहारं सूचयति। तदीयां सूचनां सर्वे अङ्गीकुर्वन्ति स्म। सुशान्तः अपि एतादृशकार्येण सन्तोषम् अनुभवति स्म।

सुशान्तः सदा पितुः रोगविषये चिन्तयति स्म। ग्रामवैद्येन मिलित्वा रोगस्य कारणं चिन्तयति स्म। औषधानि कथं रोगं निवारयन्ति इति च परीक्षते स्म।

एतद्विषये एव चिन्तयन् सुशान्तः शरीरशास्त्रसम्बन्धे बहु अध्ययनं कृतवान्। एतेन 'पितुः रोगनिवारणं कथम्' इति सामान्यकल्पना तेन प्राप्ता। अनन्तरं सः मातरं पितरं च अनिवेद्य एव विशेषप्रकारकं व्यञ्जनं निर्मितवान्। एतस्य सेवनेन मासत्रये एव गणपतिः सम्पूर्णस्वास्थ्यं प्राप्तवान्। एतदनन्तरं सुशान्तः पितरं स्वकीयचिकित्साक्रमं निवेदितवान्। गणपतिः आश्चर्यचकितः। सः ग्रामवैद्यं सर्वं वृत्तान्तं निवेदितवान्।

वैद्यः आश्चर्यं प्रकटयन् उक्तवान्- "राज-

तदा गणपतिः व्याधिना पीडितः। दिने दिने दुर्बलः जातः च। बहुवर्षपर्यन्तं सः एवमेव अस्वस्थः आसीत्। अतः गणपतिः पुत्रं गृहे एव स्थापयित्वा गृहकार्याणि कृषिकार्याणि च सम्यक् शिक्षितवान्। पञ्चदशे वयसि सुशान्तः सर्वाणि कार्याणि स्वयं निर्वोढुं समर्थः जातः।

सुशान्तः बहु अध्ययनं कर्तुम् इच्छति स्म। तदीये ग्रामे विद्यमानः अध्यापकः तु अधिकं शिक्षितः न। सः अक्षराभ्यसम्, आरम्भिकपाठं च कारयितुं समर्थः आसीत्, तावदेव। सुशान्तः तु बुद्धिमान्। सः एतस्य गुरोः समीपे अध्ययनं कुर्वन् सहपाठिनः अतिवर्त्य शिक्षणं प्राप्तवान्। तस्मिन् ग्रामे निवसतः कवेः शङ्करस्य सकाशात् काव्यशिक्षणं प्राप्तवान्।

धान्यां मम स्नेहितः एकः प्रसिद्धः वैद्यः अस्ति। सः वैद्यशास्त्रे पारङ्गतः। भवतः पुत्रस्य बुद्धिः तु असाधारणा। सुवर्णं निकषोपलघर्षणेन एव उज्ज्वलतां याति। एवम् एव पुरुषस्य प्रतिभा तदा एव प्रकाशतां याति यदा युक्तः अवकाशः लभ्यते। अतः भवान् भवतः पुत्रं गुरुकुलं प्रेषयतु'' इति।

'पुत्रः पाठनीयः' इति गणपतेः अपि तीव्रतरा इच्छा आसीत्। अतः सः पुत्रेण सह राजधानीं प्रति प्रस्थितः। सः ज्ञातवान् यत् राजधान्यां दिलीपः नाम गुरुः सर्वशास्त्रेषु पारङ्गतः अस्ति इति।



मार्गे गणपतिः एकस्मिन् ग्रामे निवासं कृतवान्। तत्र तदीयः एकः बन्धुः आसीत्। सः बन्धुः सुशान्तं परिक्ष्य उक्तवान्- ''भवतः पुत्रः कविः भविष्यति। मम पुत्रः चन्द्रभानुः दिलीपसमीपे काव्याभ्यासं कुर्वन् अस्ति। भवान् राजधान्यां तं पश्यतु। सः भवतः साहाय्यं करिष्यति। दिलीपः सर्वान् शिष्यत्वेन न स्वीकरोति। यदा शिष्याः परीक्ष्य अनुमतिं सूचयन्ति तदा एव दिलीपः स्वीकरोति'' इति।

ततः प्रस्थितः गणपतिः परेद्युः अन्यग्रामे वसतिं कृतवान्। तत्र सः ग्रामप्रमुखस्य गृहे आसीत्। ग्रामप्रमुखः सुशान्तस्य स्वभावान् परीक्षमाणः बहुधा वार्तालापं कृतवान्।

सुशान्तस्य विनयेन आकृष्टः सः उक्तवान्- ''भवान् सुशान्तं युद्धं शिक्षयतु। गुरोः मार्गदर्शनं विना अपि एषः व्यायामम् अभ्यस्तवान्। अस्य शरीरसौष्ठवम् अपि समीचीनम् अस्ति। युद्धविद्यायां प्रावीण्यं प्राप्तुम् एतस्य अधिकसमयः महान् परिश्रमः वा न अपेक्षितः। राजधान्यां मदीयः अनुजः दिलीपस्य समीपे युद्धविद्याम् अभ्यस्यन् अस्ति। भवान् तस्य साहाय्यं स्वीकर्तुम् अर्हति'' इति।

गणपतिः तस्मात् ग्रामात् प्रस्थितः। राजधानीप्राप्तितः पूर्वं पुनरपि त्रिषु ग्रामेषु वसतिं कृतवान्। तत्र सर्वे अपि सुशान्तस्य बुद्धिमत्तां विनयशीलतां च दृष्ट्वा आश्चर्यं प्रकटितवन्तः। केचन उक्तवन्तः- ''सुशान्तः वैद्यविद्यां पठतु'' इति। अन्ये सूचितवन्तः- ''सः सङ्गीतकलायाः अभ्यासं करोतु'' इति।

केचन शिल्पशास्त्रस्य अध्ययनं कर्तुं सूचितवन्तः।

कस्य सूचना उत्तमा ? का सूचना अङ्गीकरणीया इति गणपतेः समस्या। सः सर्वेषां वचनानि श्रुण्वन् शिरः कम्पितवान्, मौनं स्थितवान् च। अन्ते गणपतिः पुत्रेण सह राजधानीं प्राप्य एकस्यां धर्मशालायां वसतिम् उपकल्पितवान्।

गणपतिः दिलीपदर्शनतः पूर्वं चन्द्रभानुं द्रष्टुं निश्चयं कृतवान्। चन्द्रभानुः तत्र स्वबन्धुगृहे निवसति स्म। प्रतिदिनं दिलीपगृहं गत्वा आगच्छति स्म च। अतः सः रात्रौ विलम्बेन गृहं प्रत्यागच्छति स्म। एतेन उत्थाने विलम्बः भवति स्म।

गणपतिः सुशान्तेन सह चन्द्रभानुगृहं गतवान्। तदा चन्द्रभानुः सुप्तः आसीत्। तद्गृहीया एका महिला तम् उत्थापितवती।

चन्द्रभानुः आलस्येन एव बहिः आगत्य तयोः आगमनकारणं पृष्टवान्। गणपतिः आगमनकारणं निवेदितवान्।

चन्द्रभानुः पृष्टवान्- "भवतः पुत्रः पूर्वं कस्यापि गुरोः सकाशे विद्याभ्यासं कृतवान् वा ?" इति।

गणपतिः उक्तवान्- "न।"

"यैः पूर्वं विद्याभ्यासः कृतः तादृशान् एव पाठयति अस्माकं गुरुः। अन्यान् न पाठयति। यदि भवान् साक्षात् तं पश्यति तर्हि तत् अहङ्कारत्वेन चिन्त्यते। अस्मादीयः गुरुः अहङ्कारप्रदर्शनं सर्वथा न सहते" इति उक्त-



वान् चन्द्रभानुः।

"अतः एव भवतः साहाय्यं सम्प्रार्थ्य वयम् अत्र आगतवन्तः। अहं मम पुत्रं भवतः समीपे स्थापयामि। भवान् एव भवतः गुरोः समीपे एतं योजयतु। कृपया भवता एषः महदनुग्रहः करणीयः। भवन्तं विना अस्माकम् अन्यथा शरणं नास्ति" इति उक्तवान्।

चन्द्रभानुः सुशान्तं कवितासम्बन्धे कांश्चन प्रश्नान् पृष्टवान्। सुशान्तः समीचीनानि उत्तराणि दातुं न शक्तवान्।

एतेन कुपितः चन्द्रभानुः तर्जितवान्- "रे, भवान् सामान्यप्रश्नानाम् उत्तराणि अपि दातुं न शक्नोति। एवं स्थिते किमर्थं वा दिलीपसदृशस्य गुरोः आवश्यकता? अधिका आशा न उचिता। भवान् गन्तुम् अर्हति" इति।

अनन्तरं गणपतिः सुशान्तेन सह रामभद्रस्य गृहं गतवान्। रामभद्रः तदानीम् एव गुरुकुलं प्रस्थितः आसीत्।

आगमनकारणमपि अपृष्ट्वा "अस्मदीयः गुरुः सर्वं सहेत। किन्तु विलम्बं तु न सहेत" इति वदन् रामभद्रः ततः त्वरया निर्गतः।

तद्दिने सायं गणपतिः प्रशान्तः च पुनः रामभद्रस्य गृहं गतवन्तौ।

रामभद्रः सुशान्तं परीक्षादृष्ट्या पश्यन् पृष्टवान्- "भवतः पुत्रः कुत्रापि युद्धविद्याम् अभ्यस्तवान् वा?" इति।

चन्द्रभानुसमीपे प्रवृत्तं वार्तालापं स्मरन् गणपतिः रामभद्रम् उक्तवान्- "अस्माकं ग्रामे





एव कस्यचित् गुरोः समीपे किञ्चित् अभ्यासं कृतवान् ।''

''शिक्षणं नाम वाणिज्यं वा ? यत्र अपेक्ष्यते तत्र कर्तुं न शक्यते तत् । शिक्षणार्थं व्यवस्थिता काचित् योजना करणीया भवति। एकस्य गुरोः समीपे श्रद्धया पठनीयम्। ये स्वसमीपे अभ्यासस्य आरम्भं करिष्यन्ति तान् एव पाठयति अस्मदीयः गुरुः। ये अन्यस्य गुरोः समीपे किञ्चित् अधीत्य अत्र आगच्छन्ति तान् सर्वथा न पाठयति। तादृशान् दृष्ट्वा कुप्यति सः। अतः अहम् एतद्विषये किमपि कर्तुं न शक्नोमि'' इति उक्तवान् रामभद्रः।

तदा गणपतिः उक्तवान्- ''मित्र ! मया असत्यम् उक्तम्। चन्द्रभानुः इत्येकः दिलीपस्य शिष्यः यत् उक्तवान् तदाधारेण मया तथा उक्तम्। वस्तुतः एषः कुत्रापि युद्धविद्यां न अभ्यस्तवान्'' इति। अनन्तरं चन्द्रभानु-समीपे प्रवृत्तं सर्वं सप्रपञ्चं निवेदितवान्।

रामभद्रः एतत् श्रुत्वा सदर्पम् उक्तवान्- ''कविताविषये तेन यत् उक्तं तत् सत्यं भवेत्। यतः ते अन्यान् आश्रित्य उदरम्भरणं कुर्वन्ति। आश्रयदातुः तोषणार्थम् एकम् एव विषयं ते विभिन्नशैल्या लिखन्ति। परिश्रमं विना एव ते जीवननिर्वहणं करिष्यन्ति। किन्तु युद्धविद्या तथा न। युद्धविद्यायां नैपुण्यं सम्पादयितुं कठिन-परिश्रमः निरन्तरसाधना च अपेक्षिता। योजना-बद्धम् अध्ययनं तु नितराम् अपेक्षितम्। एतेन एव कश्चित् विद्यां पूर्णतया प्राप्तुं शक्नोति। एकैकस्य एकैकं वैशिष्ट्यं भवति। युद्धविद्यां सम्पादयितुम् यः इच्छति तेन अन्याश्रयणं न करणीयम्'' इति।

गणपतिः अनुरोधपूर्वकम् उक्तवान्- ''यत् प्रवृत्तं तत् गतम् एव। भवता एव मदीयः पुत्रः दिलीपस्य आश्रये योजनीयः'' इति।

एतेन रामभद्रः शान्तः जातः। सः सुशान्तं कांश्चन प्रश्नान् पृष्टवान्। अनन्तरं गणपतिम् उक्तवान्- ''भवतः पुत्रस्य कृषिः एव उचिता, न तु युद्धविद्या। युद्धविद्यार्थम् एषः सर्वथा अनर्हः। एतादृशानां प्रवेश-विषये अहं गुरोः समीपे किमपि वदामि चेत् सः मां गुरुकुलतः एव निष्कासयति। गुरोः

कोपपात्रः भवितुम् अहं न इच्छामि। मां वृथा न पीडयन्तु'' इति।

गणपतिः निराशः ततः निर्गतः। प्रायः सर्वत्र तेन एतादृशः एव अनुभवः प्राप्तः। 'किं करणीयम् ?' इत्यत्र कोऽपि विचारः न स्फुरति तस्य मनसि।

गणपतेः सुशान्तस्य च गमनागमनं धर्मशालायाः यजमानः प्रतिदिनं पश्यन् आसीत्। एकदा सः गणपतिम् एतद्विषये पृष्टवान्। गणपतिः स्वकीयां समस्यां सविस्तरं निवेदितवान्।



''भवान् एतादृशलघुविषये किमर्थम् एतावत् कष्टम् अनुभवति ? दिलीपस्य शिष्याः राजास्थानेषु निरायासम् उद्योगं प्राप्नुवन्ति। एतदतिरिच्य समग्रे देशे दिलीपशिष्याणां विषये आदरभावः अस्ति। अतः दिलीपः सर्वान् शिष्यत्वेन न अङ्गीकरोति। येन दशसहस्रदीनाराः दीयन्ते, तम् एव सः शिष्यत्वेन अङ्गीकरोति। भवदीयं पुत्रं दिलीपस्य गुरुकुले स्थापयितुम् इच्छति चेत् भवान् अपि दशसहस्रदीनारान् ददातु। तेन सुलभतया अवकाशः लभ्यते। अन्यथा सहस्रजनान् पश्यति चेदपि प्रयोजनं नास्ति।'' इति धर्मशालायजमानः स्पष्टम् उक्तवान्।

गणपतिः एतत् श्रुत्वा आश्चर्यचकितः। ''दिलीपः अपि एवम् विद्यायाः विक्रयणं करोति'' इति ज्ञात्वा सः बहु खिन्नः।

''यदि शिक्षणस्य अपि विक्रयणं प्रचलति, युवकानां का गतिः ?'' इति चिन्तितवान् गणपतिः। सः किञ्चित्कालं चिन्तामग्नः आसीत्। अनन्तरं सः ततः प्रस्थितः। सुशान्तः तम् अनुसृतवान्। उभौ अपि राजधानीं त्यक्त्वा स्वग्रामम् आगतवन्तौ।

वेतालः एवं कथां समाप्य उक्तवान्- ''राजन्! एतेन ज्ञायते यत् गणपतिः कृपणः इति। यतः सः दशसहस्रदीनारान् दातुम् अनिच्छन् पुत्रशिक्षणयोजनाम् एव परित्यक्तवान्। किं सः अविवेकी ? मम सन्देहानाम् उत्तरं जानन् अपि यदि न वदति तर्हि भवतः शिरः सहस्रधा छिन्नम् भविष्यति'' इति।

तदा त्रिविक्रमः उक्तवान्- ''गणपतिः

कृपणः न। पुत्रं सः यत् ग्रामम् प्रत्यानीतवान् तत्र कृपणत्वस्य अदूरदर्शितायाः वा अवकाशः एव नास्ति। दिलीपस्य शिष्याणां दर्शनेन तेन एतादृशः निर्णयः स्वीकृतः। यः शिक्षायाः अपेक्षया धनमेव अधिकं मन्यते सः उत्तमः गुरुः भवितुं न अर्हति। उत्तमः गुरुः सः एव यः धनापेक्षया ज्ञानम् अधिकम् इच्छति। दिलीपः समर्थः गुरुः स्यात् नाम। किन्तु तस्य शिष्याः उत्तमाः पण्डिताः न भवन्ति, अपि तु धनसम्पादनपराः। अत्र प्रत्यक्षप्रमाणं तदीयाः शिष्याः एव। तदीयशिष्येषु विनयस्य लेशः अपि नास्ति। सर्वे अहङ्कारस्य मूर्तयः।

भवान् एव पश्यतु। चन्द्रभानुः रामभद्रः इत्यादयः सर्वे अपि महापण्डिताः एव। किन्तु तेषुः एकः वा विनयं प्रदर्शितवान् वा? सर्वे अदि दर्पं प्रदर्शितवन्तः, न तु विनयम्।

सुशान्तेन उच्चतमा विद्या न प्राप्ता स्यात्। किन्तु सः पितुः समीपे वसन् गृहकार्येषु साहाय्यं करोति। तेनैव सह परिसरं परिशीलयन् स्वप्रतिभया एव विशेषज्ञानं प्राप्नोति। सर्वे ग्रामवासिनः सुशान्तस्य बुद्धिमत्तायाः विनयस्य च प्रशंसां कुर्वन्ति स्म। ततः स्व-समस्यायाः परिहारम् अपि प्राप्नुवन्ति स्म। दशसहस्रदीनारान् दत्वा दिलीपसमीपे सुशान्तस्य प्रेषणं नाम मूर्खता एव। बुद्धिपूर्वकं कोऽपि आत्मनः हानिं न इच्छति किल? अतः एव गणपतिः पुत्रेण सह स्वग्रामं प्रत्यागतवान्।

यदि दिलीपस्य समीपे एव सुशान्तः स्थाप्यते तर्हि सुशान्तः तु महापण्डितः भवेत्। किन्तु दिलीपस्य इतरशिष्याः इव सः गर्वशीलः भविष्यति चेत् तेन किं प्रयोजनम्? अतः 'ग्रामे एव सुशान्तस्य जीवनम् उज्वलं भविष्यति' इति गणपतिः चिन्तितवान्। एवंगणपतेः व्यवहारे अविवेकस्य लेशः अपि नास्ति'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः वेतालः शवसहितः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।



# असन्तृप्तिः

कस्मिंश्चित् ग्रामे केशवः नाम कश्चित् निरुद्योगी आसीत्। सः एकदा तत्रत्यधनिकस्य गृहं गत्वा उद्योगं प्रार्थितवान्। अनन्तरं प्रवृत्तेन वार्तालापेन सन्तुष्टः धनिकः- "भवान् वेतनत्वेन कति रूप्यकाणि इच्छति ?" इति पृष्टवान्।

केशवः 'भवतः इच्छा' इति उक्तवान्। तदा धनिकः 'तथा मास्तु। भवतः जीवनार्थं कति रूप्यकाणि आवश्यकानि इति वदतु' इति पृष्टवान्। केशवः किञ्चिदालोच्य 'द्विशतं रूप्यकाणि ददातु' इत्युक्तवान्। 'तथास्तु। श्वः प्रातः कार्यारम्भं करोतु' इत्युक्तवान् धनिकः।

तदा केशवः असन्तुष्टः सन् "मया द्विशतं पृष्टम्। त्रिशतं प्रष्टुमपि अवकाशः आसीत्। इदानीं पुनः गत्वा प्रष्टुं न शक्यते" इति चिन्तयन् बहुधा व्याकुलितः अभवत्।

परेद्युः केशवः धनिकस्य गृहं गत्वा कार्यं कर्तुम् अनुमतिं प्रार्थितवान्। तदा धनिकः म्लानेन मुखेन एवम् उक्तवान्- "भोः, अन्यथा मा भावयतु। एतानि दशरूप्यकाणि स्वीकृत्य गच्छतु। यतः पूर्वं यः कर्मकरः आसीत् स एव पुनः क्षमायाचनां कृत्वा कार्यं कर्तुम् आरब्धवान्" इति।

केशवः दशरूप्यकाणि स्वीकृत्य उक्तवान्- "भोः, भवतां गृहे कार्यं नास्ति इति श्रुत्वा मम बहु सन्तोषः अभवत्।"

'किमर्थम्' इति आश्चर्यचकितः धनिकः पृष्टवान्।

"कारणं न वदामि। किन्तु एकं विषयं निवेदयामि। कृपया इतःपरं भवता वेतन-विषये कर्मकराः कदापि नैव प्रष्टव्याः। तेषां कार्यकुशलतां दृष्ट्वा भवान् एव तेषां वेतनं निश्चिनोतु" इति केशवः उक्तवान्।

केशवेन किमर्थं तथा उक्तम् इति धनिकः ज्ञातुं न शक्तवान्।





# स्नेहस्य मौल्यम्

राजपुरम् इति कश्चित् ग्रामः। तत्र प्रायः सर्वेऽपि तन्तुवायाः। राजपुरस्य पटाः बहु समीचीनाः इति सर्वत्र प्रसिद्धाः। अतः सर्वे अपि तानेव पटान् क्रीणन्ति स्म। तस्मिन् ग्रामे गणपतिः केशवः च प्रतिवेशिनौ स्नेहितौ च।

वेमया उत्कृष्टानि वस्त्राणि प्रवाय तानि वस्त्राणि नगरं प्रति ताभ्यां नीयन्ते। तत्र नगरे वणिजः तानि वस्त्राणि क्रीणन्ति। तयोः वस्त्राणि क्रेतुं बहवः ग्राहकाः सन्ति।

गणपतेः स्वीयं शकटम् आसीत्। सः तस्मिन् एव शकटे वस्त्राणि नीत्वा क्रीणाति। केशवस्य गृहे बहवः जनाः। गृहे व्ययोऽपि अधिकः। अतः सः एकं शकटं क्रेतुं न शक्तवान्। शकटस्य आवश्यकता अस्ति चेत् सः भाटकशकटेन नगरं गच्छति। शकटं न लभ्यते चेत् वस्त्राणि स्वयं शिरसा एव नयति।

गणपतिः कदापि अन्येषां साहाय्यं न करोति। सर्वदा स्वस्य कुटुम्बस्य विषये एव तस्य प्रवृत्तिः। एषः तस्य स्वभावः। यद्यपि गणपतिः केशवश्च स्नेहितौ। तथापि गणपतिः केशवाय शकटं दातुं न अभिलषति। अपि च केशवस्य दारिद्र्यम् अजानन् इव तस्य समीपे गणपतिः एवं वदति- "भोः केशव! भवान् भाटकशकटेनैव कियत्दिनपर्यन्तं जीवनं निर्वहति? वाणिज्यार्थम् एकं शकटम् आवश्यकमेव। स्वीयं शकटम् अस्ति चेत् लाभोऽपि भवति" इति। एतादृशानि वचनानि श्रुत्वा अपि केशवः किमपि अवदन् विहस्य तूष्णीं भवति।

तस्मिन् ग्रामे राघवः नाम कश्चित्। सः राघवः गणपतिकेशवयोः उभयोरपि स्नेहितः। राघवः विद्यावान्। तथापि तेन कोऽपि उद्योगः न लब्धः। सः उद्योगार्थं प्रयत्नं तु कुर्वन् एव आसीत्। उद्योगप्राप्तिपर्यन्तं ग्रामे एव पितुः

'भामहः'

कृषिविषये साहाय्यं कुर्वन् आसीत्।

अन्ते तस्य बान्धवानां साहाय्येन नगरे एव उद्योगः प्राप्तः। अतः सः पत्न्या पुत्रैश्च साकं नगरे एव वासं कृतवान्।

विक्रयणाय यदा गणपतिः केशवः वा नगरं गच्छतः तदा राघवस्य गृहं प्रति गच्छतः। यतः राघवस्य माता एतयोः द्वारा पुत्राय दातुं किमपि भक्ष्यं प्रेषयति।

अतिथीनां विषये राघवस्य महान् आदरः। तस्य पत्नी अपि तादृशी एव। अपि च सा स्वादुतमं पाकं करोति। गृहं यः कोऽपि आगच्छति चेत् राघवः भोजनम् अपरिविष्य न प्रेषयति।

किन्तु केशवः कदापि राघवस्य गृहे भोजनं न करोति। केनापि व्याजेन भोजनम् अकृत्वा एव नगरे कार्यं सामाप्य ग्रामं प्रत्यागच्छति।

गणपतिस्तु न तथा। नगरं गच्छति चेत् राघवस्य गृहे एव भोजनं करोति। यतः पूर्वं नगरे भोजनविषये एव तस्य समस्या आसीत्। इदानीं तु सा समस्या परिहृता इति सर्वदा राघवस्य गृहे एव भोजनं करोति।

गच्छति काले, एकदा गणपतेः संशयः उत्पन्नः। 'मम विषये राघवस्य गृहे सर्वेषाम् अनादरः उदभूत्' इति। यतः राघवस्य पत्नी सुमती, तथा पुत्राश्च गणपतेः विषये उदासीनतां प्रदर्शयन्ति। केशवं बहु श्लाघयन्ति अपि। केशवस्य विषये तेषां महान् आदरः।



एकस्मिन् दिने गणपतिः केशवस्य गृहं गत्वा वाणिज्यविषयं किञ्चित् समालोच्य केशवं प्रति एवम् उक्तवान्- "भोः, एषः विषयः भवता अपि ज्ञातः इति मन्ये। यत् ग्रामीणाः एव मैत्र्याः याथार्थ्यं जानन्ति। नगरजीवनम् अन्यत् एव। उदाहरणार्थं नगरे राघवः अस्ति किल ? तस्य, तस्य पत्न्याः, पुत्राणां च रीतिः एव इदानीं भिन्ना जाता। ते इदानीं पूर्ववत् आदरं न प्रदर्शयन्ति" इति।

आश्चर्यचकितः केशवः एवम् उक्तवान्- "अहं तु न तथा भावयामि। यतः ते इदानीं अपि मम विषये आदरं प्रदर्शयन्तः एव सन्ति।"

गणपतिः उपहस्य "सत्यम्। बहुधा ते भवन्तः स्तुतिं कुर्वन्ति।मया अपि तत् श्रुतम्। तत्र रहस्यं किमिति देवः एव जानाति" इति उक्तवान्।

"तत्र रहस्यं किमपि नास्ति। केवल-सम्भाषणे यावान् आदरःभवति तावान् आदरः सर्वदा भोजनकरणे न भवति। यदि अस्मत्-कारणतः तेषां व्ययः वर्धते तर्हि ते क्रमशः अस्मान् अगौरवेण पश्यन्ति। एतत् तु सहजम्" इत्युक्तवान् केशवः।

तत् श्रुत्वा गणपतेः चपेटिकानुभवः अभवत्। केशवस्य विषये किमर्थं राघवस्य गृहे तादृशम् आदरं प्रदर्शयन्ति इति इदानीं सः ज्ञातवान्।

'पत्न्या पुत्रैश्च साकं राघवः नगरे वसति। तेन अधिकं वेतनम् अपि न लभ्यते। तादृशस्य राघवस्य गृहे भोजनप्रियः अहं गत्वा सर्वदा भोजनं करोमि चेत् तेषां बहुकष्टं भवेत्।' इति चिन्तितवान् गणपतिः।

ततःप्रभृति सः बहुपरिवृत्तः। अन्येषां सुखदुःखानि ज्ञात्वा तेषां साहाय्यमपि करोति। अपि च केशवस्य यदा शकटस्य आवश्यकता भवति तदा स्वीयं शकटमेव तस्मै ददाति। नगरं गच्छति चेत् राघवस्य पुत्राणां हस्ते क्रीडनकादिकं दत्त्वा भोजनम् अकृत्वा एव ग्रामं प्रत्यागच्छति।



# राक्षसनीतिः

एकदा भक्तानां कश्चन समूहः काशीयात्रार्थं गच्छन् आसीत् ।

मार्गमध्ये एकम् अरण्यम् । सर्वे भक्ताः तस्मिन् अरण्ये गच्छन्ति स्म । तदा तत्रस्थः एकः राक्षसः युगपत् एव बहू जनान् दृष्ट्वा एकं लघुविनोदं कर्तुम् अपेक्षितवान् ।

सः एकं बृहद्वृक्षम् आरूढवान् । अनन्तरं वृक्षतः उच्चैः गर्जनं कुर्वन् भक्तानां पुरतः कूर्दितवान् । एतेन सर्वेषां भक्तानां शरीरे कम्पनम् आरब्धम ।

राक्षसः तान् प्रति उक्तवान्– " भीतिः मास्तु । भवत्सु यः कोऽपि स्वयम् आगत्य मम आहारः भवति चेत् अन्यान् सर्वान् अपि अहं मुञ्चामि ।"

तेषु एकैकः अपि स्वस्य पार्श्वस्थः राक्षसस्य आहारः भवतु इति चिन्तितवान् । कोऽपि अग्रे न आगतवान् । तदा राक्षसः सर्वान् अपि हन्तुं सिद्धः अभवत् ।

तेषु जनेषु सारङ्गपाणिः अपि एकः । सः कुटुम्बक्लेशैः पीडितः गङ्गायां प्राणान् त्यक्तुं इच्छन् अन्यैः सह आगतः आसीत् । सः अग्रे आगत्य उक्तवान्– " अहं सिद्धः अस्मि । भक्षयित्वा अन्यान् मुञ्चतु" इति ।

राक्षसः स्मयमानः सारङ्गपाणिं त्यक्त्वा अन्यान् सर्वान् अपि हतवान् । अनन्तरं शनैः तान् सर्वान् खादितुम् आरब्धवान् ।





# कः श्रेष्ठः ?

काशीराज्ये ब्रह्मदत्तस्य शासनसमयः आसीत्। तदा बोधिसत्वः काशीराजस्य पुत्ररूपेण अवतारं स्वीकृतवान्। सः तक्षशिलायाः विद्यापीठं गत्वा विद्यार्जनं कृतवान्। यदा सः षोडशवर्षीयः जातः, तदा सः राजनीतिशास्त्रपुराणादिषु समस्तविद्यासु पारङ्गतः अभवत्। जनकस्य मरणानन्तरं महाराजपदवीं प्राप्य, धर्मस्य किञ्चिदपि लोपम् अकुर्वन् शासनं कर्तुम् आरब्धवान्।

तस्य शासनकाले प्रजानां कष्टं वा दुःखं वा किञ्चिदपि न आसीत्। अशुभस्य वा अन्यायस्य वा अक्रमस्य वा कुत्रापि अवकाशः एव न आसीत्। जनाः सुखेन कालं यापयन्ति स्म। न्यायालयाः शून्याः जाताः। तेषाम् आवश्यकता एव न आसीत्। बहुवर्षाणि अतीतानि। राजास्थानं निष्क्रियं जातम्। प्रजासु परस्परं किञ्चिदपि वैमनस्यं न आसीत्। जनानां मध्ये कोलाहलः एव न दृष्टः। एतत्सर्वं दृष्ट्वा राजा संशयग्रस्तः अभवत्। स्वीयशासनक्रमे यः कोऽपि दोषः भवेत् वा ? जनाः मम विषये किं चिन्तयन्ति ? न्यूनातिन्यूनं जनाः परस्परं कलहं कुर्वन्ति चेत्, तदा तेषां अभिप्रायान् ज्ञातुं शक्नोमि स्म। किन्तु प्रजासु एकः अपि राजास्थानस्य मार्गे अपि न चलति। एतस्यां परिस्थितौ महाराजस्य प्रजानां च मध्ये सम्बन्धः एव नास्ति। एतत् तु न शुभलक्षणम्। किं करोमि ?"

एवं रीत्या चिन्तयन् महाराजः स्वीयं रथम् आरुह्य काशीनगरे सर्वत्र सञ्चरन् तत्र तत्र जनान् 'मम शासनक्रमे यः कोऽपि दोषः अस्ति वा ?' इति पृष्टवान्।

एवं क्रमेण सः अनेकस्थानेषु बहुजनान् पृष्टवान्। सर्वत्र अपि एकमेव उत्तरं लब्धम्। "भवतः राज्ये वर्तमानाः वयं सर्वे परमसुखिनः

'जातककथा'

स्म: । अस्माभि: कोऽपि दोष: न दृष्ट:" इति ।

एतावता महाराज: सन्तुष्ट: न अभवत् । स: सर्वाणि राजचिह्नानि निष्कास्य सामान्य-नागरिकवेषभूषणानि धृतवान् । अनन्तरं एकं सामान्यरथम् आरुह्य नगरं त्यक्त्वा ग्रामत: ग्रामं सञ्चरितुम् आरब्धवान् । तत्र तत्र उद्यानेषु विपणिषु च प्रयाणं कुर्वन् स्वीयविषये प्रजानाम् अभिप्रायान् ज्ञातुं प्रयत्नं कृतवान् । इत्थं स: अनेकग्रामान् अटितवान् । बहुजनान् पृष्टवान् । किन्तु कुत्रापि किञ्चिदपि आक्षेपवचनं न श्रुतम् । अत्यन्तसमीचीनं शासनम् इत्येव सर्वे वदन्ति स्म ।

अन्ते रथेन राज्यस्य सीमास्थानं प्राप्तम् । अनन्तरं राजा प्रत्यागमनमार्गम् अनुसृत्य तत: प्रस्थितवान् । तदा मार्गमध्ये पुरत: अन्य: रथ: आगच्छति स्म । तत्र मार्ग: अतीव सङ्कुचित: आसीत् । द्वयो: अपि रथयो: युगपत् क्रमणार्थं पर्याप्त: अवकाश: तत्र न आसीत् । द्वयो: अपि पार्श्वयो: भित्तिसदृशा: शैला: आसन् ।

द्वौ अपि रथौ परस्परं अभिमुखीकृत्य स्थितवन्तौ ।

"भो: रथचालक, वयं पुरत: गन्तुम् इच्छाम: । भवत: पृष्ठभागे मार्ग: विशाल: अस्ति । अहं प्रथमं मम रथं अग्रे नयामि । तावत्पर्यन्तं भवत: रथं पृष्ठत: चालयित्वा पार्श्वे स्थापयतु" इति द्वितीयरथस्य सारथि: उक्तवान् ।



"माम् आज्ञापयितुं भवत: क: अधिकार: अस्ति ? भवान् एव भवत: रथं पृष्ठत: चालयतु । तत्रापि मार्ग: विशाल: अस्ति" इति शान्तस्वरेण काशीराज्यस्य सारथि: उक्तवान् ।

"मम रथे कोसलमहाराज: अस्ति" इति द्वितीयरथस्य सारथि: क्रोधेन उच्चै: उक्तवान् ।

काशिराज्यं यावत् विस्तृतम् आसीत्, तावदेव कोसलराज्यम् अपि विशालम् आसीत् । वयसा, विद्यया, ज्ञानेन च कोसलराज: मल्लिक: काशीराज: च समानौ । कोसलराज: अपि

वेषपरिवर्तनं कृत्वा स्वीयलोपदोषान् ज्ञातुं राजधानीतः प्रस्थाय सीमाभागपर्यन्तम् आगतवान् आसीत्।

"भवतः महाराजे अस्माकं महाराजापेक्षया गुणाधिक्यं किम् अस्ति ?" इति काशीराजसारथिः पृष्टवान्।

तदा सद्यः एव कोसलराजसारथिः गीतरूपेण एवम् उक्तवान्-

"दलहं दलहस्य खिपति मल्लिको
मुदुना मुदुल,
साधुम्पि साधुना जेति असाधुम्पि असाधुना,
एतादिसो अयं राजा मग्गा उय्याहि सारथि"

(अस्माकं मल्लिकमहाराजः दुष्टान् प्रति दुष्टः। सज्जनान् प्रति सज्जनः। सज्जनान् प्रीत्या सम्मानयति। क्रूररूपेण दुष्टनिग्रहं करोति।)

तत् वचनं श्रुत्वा काशीराजस्य सारथिः तेनैव गानरूपेण एवं रीत्या उत्तरं दत्तवान्-

"अक्कोदेन जिने कोधं असाधुं साधुना जिने,
जिने कदरियं दानेन सच्चेन अलिकवादिनम्,
एतादिसो अयं राजा मग्गा उय्याहि सारथि"

(अस्माकं महाराजः क्रोधं शान्त्या जयति। दुष्टान् अपि प्रीत्या वशीकरोति। बहुमानदानेन कृपणान् पराजयति। असत्यं सत्येन जयति।)

काशीराजस्य सारथेः वचनं श्रुत्वा, तत्क्षणे एव कोसलराजः मल्लिकः त्वरया स्वीयरथात् अवतीर्य आगत्य काशीराजं प्रणम्य "महात्मन्, इदानीम् अहं मम दोषं ज्ञातवान्। तं लोपं समीकृत्य इतोऽपि अतिशयरूपेण धर्मेण राज्यपालनं करिष्यामि" इति उक्तवान्।

अनन्तरं काशीराजः स्वीयां राजधानीं प्रत्यागत्य, धर्मस्य सूच्यग्रमितम् अपि लोपम् अकुर्वन्, तदा तदा आत्मपरिशीलनं कुर्वन्, अवतारसमाप्तिपर्यन्तं राज्यशासनं कृतवान्।

एषः स्वयं न्यायमार्गम् अनुसरन्, अन्ये यथा न्यायमार्गात् च्युताः न भवेयुः तथा जागरूकः तिष्ठति स्म। तदीये शासनकाले समग्रं भूमण्डलं सुखपूर्णम् आसीत्।





# भारतस्य पुनरुज्जीवनम्

राजनैतिकं चैतन्यं, यथा १८५७तमे संवत्सरे सैनिकक्रान्तेः कारणं जातं तथैव भारतीयपुनरुत्थनहेतुकाः नवीनाः भावाः नवीनं चैतन्यं च समग्रे देशे व्याप्तम्। तस्मिन् सन्दर्भे जातेषु समाजपरिष्कारकेषु राजा राममोहन-रायस्य नाम अग्रगण्यम्।

राममोहनरायस्य जन्म बंगालप्रदेशे हुग्लीमण्डले१७७२तमे वत्सरे जातम्। सः सहगमनवर्णभेदादिकुरीतीनां उन्मूलने निरन्तरं कार्यं कृतवान्। १८२८तमे वत्सरे सः ब्रह्मसमाजस्य स्थापनां कृतवान्। "ईश्वरः अद्वितीयः, जातिभेदः सर्वथा त्याज्यः। स्त्रीभ्यः शिक्षणं दातव्यम्" इत्यादिविषयान् सः सयुक्तिकं प्रतिपादितवान।





आंग्लेयानां भारतीयानां च मध्ये भेदः न स्यात् इति राममोहनरायः प्रति-पादितवान्। आंग्लशिक्षणस्य महत्वं जानन् सः भारते तस्य प्रसारं कृतवान्। दिल्लिशासकः राममोहनरायं 'राजा' इति उपाधिना सम्मानितवान्। तथैव सः 'भारतीयानां स्थितिम् आंग्लेयाः जानन्तु' इति दृष्ट्या राममोहनरायं इंग्लेण्डदेशं प्रेषितवान्।



राजराममोहनरायस्य देहान्त्यं १८३३तमे वत्सरे इंग्लेण्डदेशे जातम्। अनन्तरकाले समाजोद्धरकत्वेन प्रसिद्धः स्वामी दयानन्दसरस्वती। एतस्य जन्म १८२४तमे वत्सरे मोर्विनामके ग्रामे जातः। एषः वेदानाम् नवीनं भाष्यं लिखितवान्, आर्यसमाजस्य स्थापनां कृतवान्; अन्यानि समाजपरिष्कारककार्याणि आरब्धवान् च।

स्वामी दयानन्दसरस्वती महाविद्वान् शिक्षाशास्त्री च। एतस्य विचारेण हरिद्वारस्य गुरुकुलविद्यालयेन महती प्रेरणा प्राप्ता। विषयज्ञापनेन सह एव गुरुकुलपद्धत्या बोधनं, संस्कृति-परम्परा-नैतिकमूल्यादीनां विषये छात्रेषु जागरणं इत्यादयः एतेन प्रतिपादिताः।





१८३६तमे वत्सरे बङ्गालप्रदेशे कुमारपुरग्रामे रामकृष्णपरमहंसस्य जन्म जातम्। एषः षष्ठे वयसि एव कृष्णमेघानां मध्ये उड्डयमानान् श्वेत-बलाकन् दृष्ट्वा तल्लीनः जातः। बाह्य-प्रपञ्चं विस्मृत्य समाधिस्थितिं प्राप्तवान्। तथैव आध्यात्मिकम् आनन्दम् अनुभूतवान् च।

एतदनन्तरं रामकृष्णः रसमयीराज्ञ्या निर्मिते कालिकामन्दिरे पूजकत्वेन नियुक्तः । 'देव्याः दर्शनम् एतेन प्राप्तं, साक्षात्वार्तालापः अपि अनयोः जातः' इति श्रूयते । एषः रामकृष्णः सर्वेषां भक्तिमार्गाणाम् अध्ययनं कृत्वा निष्कर्षं प्राप्तवान् यत्- सर्वेषां मार्गाणां लक्ष्यम् एकम् एव इति ।





बहवः रामकृष्णपरमहंसस्य शिष्याः सञ्जाताः । गहनम् अपि आध्यात्मिकतत्वं सरलया रीत्या एषः यत् प्रतिपादयति स्म तेन सर्वे आकृष्टाः भवन्ति स्म । क्रमशः "रामकृष्णपरमहंसः भगवतः अवतारभूतः" इति जनाः विश्वसितवन्तः ।

रामकृष्णपरमहंसेन आकृष्टेषु स्वामी विवेकानन्द प्रमुखः, यस्य पूर्वाश्रमस्य नाम नरेन्द्रः इति आसीत् । एतस्य जन्म १८६३ वत्सरे जातः। १८८१ तमे वत्सरे एषः रामकृष्णस्य शिष्यत्वम् अङ्गीकृतवान् ।





१८९३तमे वत्सरे शिकागोनगरे विश्वसर्वधर्मसम्मेलनं प्रवृत्तम्। तस्मिन् सम्मेलने विवेकानन्दः भारतीयप्रतिनिधीभूय भागं गृहीतवान्। तत्र आध्यात्मिकतत्वं विवेचयन् एषः यत् भाषणं कृतवान् तेन सर्वे पाश्चात्याः जिज्ञासवः चकिताः।

१८९३तमे वत्सरे स्वकीयशिक्षणं समाप्य युवकः अरविन्दः इंग्लेण्ड्तः भारतम् आगतवान्। कालान्तरे एषः भारते'राष्ट्रिय प्रवक्ता' इति विख्यातः अभवत्।






सामान्यतः अस्मिन् एव काले सुविख्यातः उपन्यासकारः बङ्किमचन्द्र चटर्जी सुप्रसिद्धं 'वन्दे मातरं' गीतं रचितवान्। देशभक्तेः उद्बोधकस्य एतस्य गीतस्य प्रेरणया स्वातन्त्र्ययोद्धारः हसन्तःस्वप्राणान् भारतमातुः पदतले समर्पितवन्तः।



# वरदक्षिणा-पिशाचः

सीतापुरग्रामे गोविन्दः एकः सामान्यः गृहस्थः। तस्य एकमात्रं पुत्री सुभाषिणी। सा सुशीला सुन्दरी च।

यदा सुभाषिणी प्राप्तवयस्का जाता तदा गोविन्दः तस्याः विवाहार्थं प्रयत्नम् आरब्धवान्। किन्तु सर्वे वरपक्षीयाः सहस्रशः रूप्यकाणि वरदक्षिणारूपेण पृच्छन्ति स्म। एतेन गोविन्दः चिन्ताक्रान्तः। सहस्रशः रूप्यकाणि दत्त्वा पुत्र्याः विवाहं कर्तुं सः न समर्थः।

तेषु एव दिनेषु गोविन्दस्य बाल्यस्नेहितः सुदर्शनः तदीयम् गृहम् आगतवान्। सुदर्शनः नगरे वणिक् आसीत्। वार्तालापं कुर्वन् गोविन्दः स्वपुत्र्याः विवाहसन्बान्धिनीं समस्याम् अपि निवेदितवान्।

तदा सुदर्शनः उक्तवान्- "मित्र! 'वरदक्षिणा दातुं न शक्यते' इति चिन्तयन् भवान् कियन्तं कालं यापयितुं शक्नोति? सुभाषिणी इदानीं विंशतिवर्षीया किल? कश्चित् उत्तमं सम्बन्धयोग्यं वरम् अन्विष्यतु। अहं पञ्चसहस्र-रूप्यकाणि दातुं शक्नोमि। प्रत्यर्पणविषये अनन्तरं चिन्तयामः" इति।

मित्रस्य आश्वासनेन प्रेरितः गोविन्दः विशेषोत्साहेन उत्तमं युवकं अन्वेष्टुं प्रवृत्तः। अन्ते दूरग्रामस्थम् एकं युवकं सम्बन्धयोग्यत्वेन निश्चितवान्। वरस्य मातापितरौ वरदक्षिणा-रूपेण त्रिसहस्ररूप्यकाणि इष्टवन्तौ।

विवाहसिद्धतायां व्यग्रः गोविन्दः विवाहतः पञ्चदशदिनेभ्यः पूर्वं नगरं गत्वा मित्रं सुदर्शनं दृष्टवान्। पुत्र्याः विवाहविषयम् उक्त्वा तदीयम् आश्वासनं स्मारितवान्।

तदा आश्चर्यं प्रकटयन् सुदर्शनः उक्तवान्- "पञ्चसहस्ररूप्यकाणि दीयन्ते इति मया उक्तम् आसीत् वा? तदहं सम्यक् न स्मरामि किल? तत् यत् किमपि अस्तु, इदानीं वस्तुस्थितिः तु



एवम्- इदानीं वाणिज्यं सम्यक् न प्रचलति। महतीं हानिम् अनुभवन् अस्मि अहम्'' इति।

एतत् श्रुत्वा गोविन्दः स्तम्भीभूतः। सुदर्शनस्य वचने विश्वस्य एव वरः निश्चितः। इदानीं सुदर्शनः एव स्वकीयम् आश्वासनं विस्मृतवान् अस्ति। उद्गच्छन्तं कोपं कथञ्चित् निगृह्य गोविन्दः मौनं ततः निर्गतः।

इदानीं गोविन्दस्य पुरतः एकः एव मार्गः स्फुरति ''वस्तुस्थितिं निवेद्य निश्चितः विवाह-मुहूर्तः व्याक्षेप्तव्यः। एतन्मध्ये कथञ्चित् धनराशिं सङ्गृह्य पुनः विवाहदिनं निश्चेतव्यम्'' इति।

एवं निश्चित्य सः एकस्मिन् दिने सायङ्काले भाविनः वरस्य गृहं प्रस्थितवान्।

सन्ध्यासमये गोविन्दः एकस्य अरण्यस्य समीपं गतवान्। त्वरया गन्तुं प्रवृत्तः च। अरण्यमार्गे जनानां शकटानां च सञ्चारः आसीत्। अतः सः अन्धकारतः न भीतः। अरण्यमध्ये कस्यचित् वृक्षस्य शाखातः कश्चन शब्दः श्रुतः। गोविन्दः शिरः उन्नीय उपरि दृष्टवान्। तदा काचित् कृष्णवर्णीया आकृतिः शाखातः अवतीर्य तस्य पुरतः स्थिता। तया गोविन्दः पृष्टः च- ''अस्मिन् अन्धकारे भवान् एकाकी गच्छन् अस्ति किल? भवतः भीतिः नास्ति वा?'' इति।

गोविन्दः जन्मतः धैर्यवान्। अतः सः न भीतः। 'पुरतः आगत्य स्थितः एषः कश्चन पिशाचः एव' इति सः ज्ञातवान्। 'पिशाचाः भीरून् एव पीडयन्ति न तु अन्यान्' इति चिन्तयन् गोविन्दः पिशाचं तीक्ष्णदृष्ट्या पश्यन् उक्तवान्- ''भीतिः किमर्थम्? समीपग्रामे किञ्चित् कार्यम् अस्ति। अतः गच्छन् अस्मि'' इति।

''किं कार्यम् इति वदतु। अन्यथा भवन्तं न त्यजामि'' इति उक्तं पिशाचेन।

''सर्वान् अपि कथां श्रावयन् अहं श्रान्तः। भवन्तम् अपि श्रावयामि तावत्'' इति वदन् गोविन्दः सर्वं वृत्तान्तं निवेदितवान्। अन्ते दीर्घं निश्वसन् उक्तवान्- ''मम पुत्र्याः विवाहभाग्यम् अस्ति वा न वा इति भगवान्

एव जानाति'' इति।

''किमर्थं चिन्ता? पूर्वनिश्चिते मुहूर्ते एव भवतः पुत्र्याः विवाहः भविष्यति। त्रिसहस्र-रूप्यकाणि अहं ददमि'' इति उक्तं पिशाचेन।

गोविन्दः आश्चर्यचकितः सन् पश्यन् आसीत्। अनुक्षणम् एव गत्वा पिशाचः वृक्ष-कोटरतः धनम् आनीय प्रत्यागत्य अवदत्- ''एतस्य स्यूतस्य अन्तः त्रिसहस्रं रूप्यकाणि सन्ति। एतत् स्वीकृत्य भवतः पुत्र्याः विवाहं कारयतु'' इति।

गोविन्दस्य इदानीम् अतीवः आनन्दः। ''एवं सुलभतया समस्या परिहृता भवेत्'' इति गोविन्दः कदापि न चिन्तितवान्। भगवन्तं कृतज्ञतापूर्वकं स्मरन् सः गृहं प्रत्यागतवान्। निश्चिते मुहूर्ते तस्य पुत्र्याः सुभाषिण्याः विवाहः सम्पन्नः। वरदक्षिणारूपेण प्राप्तं धनं वरपक्षीयाः सुरक्षितं स्थापितवन्तः।

दिनत्रयानन्तरं वरस्य पिता स्नुषया सह भाकटशकटम् आरुह्य स्वगृहं प्रस्थितः। यदा ते अरण्ये पिशाचवृक्षसमीपम् आगतवन्तः तदा पिशाचः वृक्षात् अवतीर्य अवदत्- ''अरे पिशाच! भवन्तम् इदानीम् अहं मारयामि'' इति।

पिशाचं दृष्ट्वा शकटे उपविष्टानां सर्वेषां शरीरेषु कम्पः उत्पन्नः। तेषु अन्यतमः किञ्चिदिव धैर्येण उक्तवान्- ''वयं तु मनुष्याः, न तु पिशाचाः। पुत्रस्य विवाहं समाप्य वयम्



आगच्छन्तः स्मः।''

वरस्य माता पृष्टवती- ''किं, मिष्टान्नम् इच्छति? अत्र बहूनि मिष्टभक्ष्याणि सन्ति। यत् इच्छति तत् स्वीकरोतु'' इति।

''शकटस्य अन्तः विद्यमानः पिशाचः सम्यक् दृश्यते। अहं तं मारयामि'' इति वदन् पिशाचः समीपम् आगतः।

वरस्य माता भीत्या उक्तवती- ''एषा पिशाची न। अपि तु अस्मदीया स्नुषा। सुभाषिणि! भवत्याः मुखं सम्यक् प्रदर्शयतु तावत्'' इति।

एतत् श्रुत्वा अट्टहासं कुर्वन् पिशाचः अवदत्- ''भवत्याः पत्युः वस्त्रेषु सुरक्षितः

वरदक्षिणापिशाचः मया स्पष्टं दृष्टः। तम् अहं मारयामि'' इति।

वरस्य पिता त्वरया धनस्य स्यूतं प्रदर्शयन् उक्तवान्- ''एषः वरदक्षिणारूपेण प्राप्तः धनस्यूतः। अत्र त्रिसहस्ररूप्यकाणि सन्ति, स्वीकरोतु'' इति।

पिशाचः धनस्यूतम् एकवारं संस्पृश्य घृणां प्रदर्शयन् अवदत्! ''भवन्तः विवाहादि-पवित्रकार्येषु किमर्थं एतस्य पिशाचस्य स्मरणं कुर्वन्ति? एतस्य पिशाचस्य कारणेन अनेके मानवाः पिशाचानाम् अपेक्षया अधिकं दुष्टता-पूर्णं व्यवहारं कुर्वन्ति।'' एवं वदन् पिशाचः धनस्यूतं स्वीकृत्य वृक्षम् आरूढवान्।

तदा सुभाषिणी दैन्यं प्रकटयन्ती स्वश्वश्रूम् उक्तवती- ''वरदक्षिणाप्राप्तिं विना विवाहः न प्रचलिष्यति इति भवन्तः उक्तवन्तः आसन्। इदानीं वरदक्षिणाधनं पिशाचेन नीतम्। इतः-परं मम का गतिः?''

तदा सुभाषिण्याः श्वश्रूः सुभाषिण्याः हस्तद्वयं स्वहस्तेन गृह्णन्ती उक्तवती- ''पिशाचस्य व्यवहारेण अस्माकम् अज्ञानं दूरंगतम्। भवती वरदक्षिणाविषयं विस्मरतु'' इति।

सुभाषिण्याः श्वशुरः उक्तवान्- ''सुभाषिणि! एषः पिशाचः वरदक्षिणापिशाचं नीतवान्। भवती दुःखिता न भवतु। भवत्याः कृते त्रिसहस्ररूप्यकात्मकानि आभरणानि कार-यामि। भवत्याः पितरं क्षमां प्रार्थयामि'' इति।

एतेन वचनेन सुभाषिणी बहु सन्तुष्टा। वरदक्षिणाधनं पिशाचेन नीतम् इति कृत्वा श्वश्रूश्वशुरौ पतिः च मां बहुपीडयेयुः, मां मातृ-गृहं प्रेषयेयुः'' इति सा चिन्तितवती आसीत्। इदानीं श्वशुरवचनेन सा चिन्ता परिहृता।

एतत् सम्भाषणं श्रुत्वा वृक्षस्य उपरि स्थितः पिशाचः हस्ततालपूर्वकं स्वकीयं सन्तोषं प्रकटी कृतवान्।

अनन्तरं सुभाषिण्याः श्वशुरः मनसि एवं चिन्तितवान्- 'अहो! मानवानाम् अपेक्षया अपि पिशाचाः एव वरम्।'





# भयग्रस्तः

एकः ग्रामः। तत्र रामः इति एकः युवकः आसीत्। सः बाल्यतः एव अतीव भीरुः। इदानीं सः षोडशवर्षीयः। तथापि तस्य भीरु-स्वभावः न अपगतः। सः सर्वदा किमपि किमपि चिन्तयन् भयम् अनुभवतिस्म। एषः एव तस्य अभ्यासः जातः। तस्य पित्रार्जिता सम्पत्तिः किञ्चित् आसीत्। किन्तु तस्य न पिता आसीत्, न वा माता। सः अनाथः।

एवं भयपीडितः सः एकदा ग्रामात् बहिः विद्यमानस्य तटाकस्य तीरे उपविष्टः आसीत्। तदा एकः चोरः भूस्वामिनः चतुर्वर्षीयं पुत्रम् अपहृत्य तत्र शीघ्रं शीघ्रं गच्छति स्म। रुदन्तं बालं ताडयन् सः बलात्कारेण तं नयति स्म।

भयग्रस्तः चेदपि रामः दृढः बलवान् च आसीत्। सः धावन् गत्वा चोरं गृहीतवान्, तथा तस्य मस्तकं नमयित्वा सम्यक् ताडित-वान्। रामस्य शरीरशक्तिं दृष्ट्वा भीतः चोरः बालं तथैव त्यक्त्वा शीघ्रं पलायितवान्।

रामः बालं गृहीत्वा भूस्वामिनः समीपं गतवान्, तथा सर्वं वृत्तान्तं निवेदितवान्।

तावत्पर्यन्तं स्वपुत्रस्य अपहरणविषयं भूस्वामी न जानाति स्म। बालः कुत्रचित् क्रीडन् अस्ति इति सः भावयन् आसीत्। अतः सः रामस्य विषये सन्तुष्टः जातः। स्वभृत्यान् किञ्चित् निन्दित्वा, रामाय एकं सुवर्णनाणकं बहुमानरूपेण दत्तवान्।

तेन नाणकेन किं करणीयम् इति रामस्य मनसि समस्या उत्पन्ना। किञ्चित्कालपर्यन्तं किमपि चिन्तयित्वा, अनन्तरं सः तटाकस्य तीरे एकत्र खनित्वा तत्र नाणकं स्थापितवान्। तस्य उपरि अभिज्ञानार्थम् एकं सस्यं आरोपित-वान्।

कानिचन दिनानि अतीतानि। अनन्तरं



तस्य देशस्य महाराजः देशसञ्चारं कुर्वन् रामस्य ग्रामं समागतवान्। ग्रामाधिकारी महाराजस्य सेवां कर्तुं रामं नियोजितवान्। रामस्य श्रद्धा-पूर्वकसेवया महाराजः सुप्रीतः अभवत्। रामस्य सर्वकार्याणि अपि तस्य प्रियाणि जातानि।

महाराजः रामं दृष्ट्वा "भवतः सेवया प्रीतः अस्मि। भवान् यत् इच्छति तत् पृच्छतु, ददामि" इति उक्तवान्।

रामः विनयेन "महाप्रभो, अहं किमपि न जानामि। मम मनः सर्वदा कयाचित् चिन्तया भयग्रस्तम् एव भवति। यथा अन्यजनाः सन्तोषेण कालं यापयन्ति तथा कालं यापयितुम् अहं न समर्थः। तादृशसन्तोषप्राप्त्यर्थं किं करणीयम् इति वदतु। अन्यत् किमपि अहं न इच्छामि" इति उक्तवान्।

"अल्पविषयान् अपि ये बृहद्रूपेण चिन्तयन्ति ते एवमेव क्लेशम् अनुभवन्ति। तथा भयग्रस्ताः भवन्ति। अस्मिन् प्रपञ्चे सर्वेषु प्राणिषु मनुष्यजन्म अत्युत्तमम्। तादृशेन मनुष्येण सर्वदा आनन्देन एव कालः यापनीयः। अतः भवता अपि न चिन्तयितव्यम्" इति राजा उक्तवान्।

रामः किञ्चित् चिन्तयित्वा पुनः 'प्रभो, एकः लघुविषयः अस्ति। अस्माकं ग्रामे सर्वे तदा तदा ग्रामान्तरं गत्वा आगच्छन्ति। किन्तु मां न कोऽपि आह्वयति। सर्वदा अत्रैव स्थित्वा कालं यापयामि। एतत् एव मम सन्तोषराहित्यस्य कारणं स्यात् इति मम संशयः" इति उक्तवान्।

तस्य वचनं श्रुत्वा तद्विषये महाराजस्य अनुकम्पः जातः। सः वात्सल्यपूर्णस्वरेण "अस्तु, इतःपरं भयस्य अवसरः नास्ति। भवान् अनाथः इति न चिन्तयतु। अहम् एव भवतः बन्धुः इति भावयतु। इदानीं भवन्तं राजधानीं नयामि। तत्र भवान् यथेच्छं विहरतु। तत्र विद्यमानानि चित्रविचित्राणि दृष्ट्वा आनन्दम् अनुभवतु। तत्र एव स्थातुम् इच्छति चेत्, तिष्ठतु। नो चेत् पुनः भवन्तं ग्रामं प्रेषयामि" इति उक्तवान्। महाराजस्य वचनानि श्रुत्वा रामस्य महान् उत्साहः सञ्जातः। महाराजेन सह राजधानीं गत्वा किञ्चित्कालं तत्र स्थित्वा सन्तोषः प्राप्तव्यः इति सः आलो-

चितवान्।

तदा सहसा तस्य सुवर्णनाणकस्य स्मरणम् अभवत्। राजधान्यां तस्य आवश्यकता भवेत् इति चिन्तयित्वा, ग्रामात् बहिः तटाकस्य तीरे गुप्तरूपेण निक्षिप्तं सुवर्णनाणकम् आनेतुं तत्र गतवान्।

किन्तु तत्र अभिज्ञानार्थम् आरोपितं सस्यं न दृष्टम्। केनापि पशुना तत् खादितम् आसीत्। अतः सुवर्णनाणकस्य स्थानं ज्ञातुं सः असमर्थः जातः। सः बहुत्र खनित्वा अन्विष्टवान्। किन्तु कुत्रापि सुवर्णनाणकं न लब्धम्। तदा सः अतीव दुःखितः अभवत्।

तावत्पर्यन्तं सः उत्साहपूर्णः आसीत्। किन्तु इदानीं पुनः भयेन एव निर्मितः विग्रहः इव जातः। तस्य कान्तिहीनं मुखं दृष्ट्वा महाराजः "किं भोः, ग्रामं त्यक्त्वा गन्तुं दुःखं भवति वा ?" इति पृष्टवान्।

"तथा किमपि न प्रभो। मया किञ्चित् धनं सङ्गृहीतम् आसीत्। तत्सर्वं तटाकस्य तीरे निक्षिप्तम्। इदानीं राजधानीगमनसमये तदपि नेतव्यम् इति चिन्तयित्वा तदर्थम् अन्विष्टवान्। किन्तु न लब्धम्। सा एव चिन्ता" इति रामः उक्तवान्।

"धनार्थं चिन्ता मास्तु। भवान् यावत् धनं इच्छति तावत् अहम् एव ददामि" इति महाराजः उक्तवान्।

"भवतः अनुग्रहेण सन्तोषः एव भवति। किन्तु परिश्रमेण सम्पादितं धनं नष्टम्। तस्य





धनस्य प्राप्तिं विना मम चिन्ता न परिहृता भवति महाप्रभो'' इति उक्तवान् रामः ।

तस्य वचनं श्रुत्वा आश्चर्यचकितः महाराजः ''धनार्थं भवान् एतावत् दुःखम् अनुभवति ! भवता तत्र कियत् धनं निक्षिप्तम आसीत् ?'' इति पृष्टवान् ।

एकमेव सुवर्णनाणकम् इति वक्तुं प्रवृत्तः रामः तथा न उक्त्वा तूष्णीम् अभवत् । ''तथा वदामि चेत्, अल्पस्य कृते एतावती चिन्ता वा इति महाराजः परिहासं कुर्यात् । तदपेक्षया अधिकं धनं नष्टम् इत्येव वक्तव्यम्'' इति चिन्तयित्वा रामः 'महाप्रभो, शतं सुवर्णनाणकानि'' इति उक्तवान् ।

महाराजः दयया 'भवतु । चिन्ता मास्तु । भूम्याः अधोभागे सुवर्णं यत्र कुत्रापि अस्तु । तस्य स्थानं ज्ञातुम् अहं समर्थः अस्मि । वयं सायङ्काले तटाकस्य तीरं गच्छामः'' इति उक्तवान् ।

महाराजस्य वचनं श्रुत्वा रामः आनन्दितः जातः । अनन्तरं राजा तटाकस्य तीरे एकत्र शतसुवर्णनाणकाणि गुप्तरूपेण स्थापयित्वा आगच्छतु इति सूचयित्वा एकं भृत्यं प्रेषितवान् ।

सायङ्काले महाराजः रामेण सह तटाकसमीपं गतवान् । अनन्तरं तीरप्रदेशे तत्र तत्र अन्वेषणस्य नटनं कृत्वा, अन्ते एकं स्थानं प्रदर्श्य 'अत्र खनतु' इति उक्तवान् ।

रामः तथैव कृतवान् । तत्र शतसुवर्णनाणकानि आसन् ।

''गणनां करोतु भोः'' इति महाराजः उक्तवान् ।

शतसुवर्णनाणकानि दृष्ट्वा रामः पूर्वापेक्षया अपि अधिकतया भयग्रस्तः जातः । तं दृष्ट्वा महाराजः **आश्चर्येण** 'किमिदं भोः ! धनं प्राप्य भवतः सन्तोषः न भवति वा ? पुनः किमर्थम् एतत् भयम् ?'' इति पृष्टवान् ।

रामः महाराजस्य पादयोः उपरि पतित्वा तं नमस्कृत्य ''क्षम्यताम् महाप्रभो, एतत् धनं मम न । अल्पस्य कृते एतावती चिन्ता वा इति भवान् परिहासं कुर्यात् इति भयेन अहम् असत्यम् उक्तवान् । मया केवलम् एकमेव नाणकं निक्षिप्तम् आसीत्'' इति उक्तवान् ।

''एवं वा ? अस्तु । यस्य कस्यापि वा

भवतु। इदानीं भवान् लब्धवान् खलु? महाराजः अहं वदामि। इतःपरं एतत् सर्वं भवतः एव'' इति उक्तवान् महाराजः।

''एतत् धनम् अहं न इच्छामि प्रभो! एकस्य एव नाणकस्य नाशेन अहम् एतावत् दुःखम् अनुभवामि। एवं हि सति शतनाणकानां नाशेन तस्य कियत् दुःखं भवेत्? परधनम् अहं सर्वथा न इच्छामि प्रभो'' इति दृढस्वरेण रामः उक्तवान्।

रामस्य सद्बुद्धिं दृष्ट्वा महाराजस्य महान् सन्तोषः जातः। सः हसन् ''राम, तत् धनं मम एव। भवतः कृते अहम् एव तत्र स्थापितवान्'' इति उक्तवान्।

''एवं तर्हि महान् अनुग्रहः कृतः। अहं सन्तोषेण स्वीकरोमि प्रभो'' इति उक्त्वा रामः तत् स्वीकृतवान्।

''रामः, भवान् गुणवान् अस्ति विश्वासपात्रं च। मम आस्थाने उन्नतं उद्योगं भवते दास्यामि। इतःपरं भवतः जीवने कदापि भयस्य लेशः अपि यथा न स्यात् तथा करिष्यामि। भवान् सर्वदा सन्तोषेण जीवतु इति एव मम अभिलाषः'' इति उक्तवान् महाराजः।

''तथा एव अस्तु प्रभो। महान् सन्तोषः जातः'' इति उक्तवान् रामः।

किन्तु रामस्य मुखे किञ्चित् अपि सन्तोषस्य चिह्नम् अपि न आसीत्। पूर्वापेक्षया अपि अधिकं भयं तत्र दृश्यते स्म। महाराजः 'इदानीम् अपि भवान् भयं किमर्थं न त्यक्तवान्'' इति तम् पृष्टवान्।

रामः शुष्कहासं प्रकटयन् 'प्रभो, नूतनस्य भयस्य कुत्र अस्ति अवकाशः! पूर्वतनभयम् एव न परिहृतम्। एतस्मिन् जन्मनि मम सुवर्णनाणकं न लभ्यते इति प्रतिभाति। अत्र एव अहं वसामि चेत्, प्रतिदिनं तटाकस्य तीरे तस्य अन्वेषणं कर्तुं शक्नुयाम्'' इति उक्तवान्।

''रामस्य भयस्वभावः जन्मजातः। स कथञ्चिदपि अपरिहार्यः एव'' इति महाराज ज्ञातवान्।





# पण्डितस्य उन्नतिः

पुरा बाग्दादनगरम् अनेके खलीफाः पालितवन्तः। तेषु अलममून्खलीफः महान् पण्डितपोषकः इति ख्यातः आसीत्। नूतन-पण्डितः वा भवतु, ख्यातः वा भवतु, तेषां योग्यतानुसारेण सर्वेभ्यः प्रशस्तिबहुमानादिकं दत्त्वा सत्कारं करोति स्म। एवं रित्या तान् प्रोत्साहयति स्म।

अलममून्खलीफः सप्ताहे एकवारं सभाम् आयोजयति स्म। तत्र न केवलं पण्डिताः, किन्तु चतुराः वाग्मिनः च भागं बोढुम् अर्हन्ति स्म। तत्र विविधविषयान् अधिकृत्य वादविवादाः प्रचलन्ति स्म। महान्तः पण्डिताः क्लिष्टसमस्याः गृहीत्वा चर्चां कुर्वन्ति स्म। तेन तत्र उपस्थितानां सामान्यजनानां अपि ज्ञानलाभः भवति स्म।

एकदा साप्ताहिकसभासमयः। अलममून्-खलीफः सिंहासने उपविष्टः आसीत्। तदा नूतनः कश्चित् सभां प्रविश्य सामान्यजनानां समीपम् अगत्वा, साक्षात् पण्डितानां समीपं गत्वा, तेषां मध्ये उपविष्टवान्। सः कश्चित् पथिकः स्यात् इति सर्वे भावितवन्तः। सः एकः पण्डितः इति कस्य अपि कल्पना नासीत्। उपविष्टान् पुनः उत्थापयितुं न कोऽपि इच्छति स्म।

सभायाः कार्यक्रमाः आरब्धाः। वादार्थम् एकः विषयः खलीफेन निर्दिष्टः आसीत्। एकैकः पण्डितः उत्थाय सर्वेषां पण्डितपाम-राणाम् अपि यथा अर्थबोधः भवेत्, तथा विषयं प्रतिपादयति स्म। एवं रीत्या अनेकैः विषयः प्रतिपादितः। तदा नूतनस्य पर्यायः सम्प्राप्तः। सः उत्थाय स्वच्छया भाषया सुस्पष्टेन उच्चारणेन च स्वाभिप्रायं बहुसमीचीनतया वर्णितवान्। तस्य प्रतिपादनरीतिं दृष्ट्वा सम्पूर्णसभा आश्चर्यचकिता अभवत्।

'अरेबिया कथा'

राजास्थानस्य श्रेष्ठविद्वांसः सभायाः प्रथमपङ्क्तौ उपविष्टाः आसन्। इदानीं खलीफः नूतनम् अपि तस्यां पङ्क्तौ उपवेशनार्थं विज्ञापितवान्। तस्य अदेशानुसारेण नूतनः उत्थाय प्रथमपङ्क्तौ उपविष्टवान्।

अनन्तरं खलीफः वादार्थम् अन्यं विषयं सूचयित्वा चर्चायाः उपक्रमार्थं प्रार्थितवान्। तस्यां चर्चायाम् यदा नूतनस्य पर्यायः प्राप्तः तदा पूर्वापेक्षया अपि अद्भुततरं यथा स्यात् तथा विषयस्य अन्तरार्थं स्पष्टीकुर्वन् सर्वेषां विद्वज्जनानां सामान्यनां च मनांसि आकृष्टवान्। सर्वे सन्तोषेण हर्षोद्गारं कृतवन्तः।

इदानीं खलीफः नूतनं प्रधानसचिवानां मध्ये स्थानं ग्रहीतुम् आहूतवान्।

अनन्तरं पुनः अपरं विषयं अधिकृत्य तर्कः आरब्धः। तदा नूतनः स्वीयं लोकानुभावं, विवेकं, वाक्चातुर्यं च प्रकटयन् समस्तां सभां मन्त्रमुग्धां कृतवान्। खलीफः तु अत्यानन्देन तं समीपम् आहूय सिंहासनस्य पार्श्वस्थिते आसने उपवेशनार्थम् आदिष्टवान्।

सभा समाप्ता। अनन्तरं खलीफः पण्डितानां कृते भोजनसमारम्भम् आयोजितवान् आसीत्।

भोजनानन्तरं सर्वे राजभवनतः निर्गतवन्तः। नूतनः अपि गन्तुम् उत्थितवान्। तदा अलममून् खलीफः तं हस्तन्लाघवेन पुरकृत्य "क्षणं तिष्ठतु, किञ्चित् विशेषरूपेण भवतः सत्कारं कर्तुम् इच्छामि। आवां मिलित्वा द्राक्षारसं पिबावः" इति उक्तवान्।



अनन्तरं खलीफः द्राक्षारसं आनेतुम् आज्ञापितवान्। उत्तरक्षणे एव अन्तःपुरस्य दास्यः रत्नखचितसुवर्णकलशेषु द्राक्षारसम् आनीतवत्यः। तदा खलीफः एकं पात्रं ग्रहीत्वा, अन्यत् पात्रं ग्रहीतुं नूतनपण्डितं सूचितवान्।

नूतनपण्डितः अत्यन्तविनयेन खलीफं दृष्ट्वा "प्रभो, मुख्यपण्डितानां पङ्क्तौ मह्यं भवान् स्थानम् अनुगृहितवान् खलु। कृपया तस्य कारणं वदतु" इति पृष्टवान्।

"भवतः विवेकः, वाक्चातुर्यं, विषय-विभागक्रमः इत्यादयः मनोहराः आसन्। तैः अहं नितरां सन्तुष्टः जातः" इति उक्तवान् खलीफः।

"अनन्तरं भवतः पार्श्वस्थिते आसने उपवेशनार्थं कुतः विज्ञापितवान्?" इति पृष्टवान् नूतनः।

"विवेकेन वाक्चातुर्येण च भवत्सदृशः अन्यः नास्ति इति भावना जाता। अपि च ततोऽपि उन्नततरम् आसनम् अन्यत् नास्ति खलु?" इति खलीफः उक्तवान्।

"एवं तर्हि मम विवेकः वाक्चातुर्यं च भवतः दयायाः अभिमानस्य च कारणद्वयम् इति सिद्धं जातम्। एवं हि सति इदानीं मां तस्मात् उन्नतस्थानात् पातयितुं भवान् किमर्थम् इच्छति?" इति नूतनः पृष्टवान्।

"किमर्थम् एवं वदति! भवतः अभिप्रायः न अवगतः" इति उक्तवान् खलीफः।

"प्रभो, भवान् इदानीं यत् पानीयं मह्यं दातुम् इच्छति, तत् मम शक्तिद्वयम् अपि अपहरति। मम सर्वनाशं करोति। मम शक्तीनां रक्षणं मया कर्तव्यं खलु? अतः कृपया एतत् पानीयम् अपीत्वा एव इतः निर्गतुं मह्यम् अवकाशं ददातु" इति प्रार्थितवान् नूतनः।

नूतनस्य वचनेन खलीफस्य महान् प्रमोदः जातः। सः सद्यः एव तस्मै पण्डिताय लक्ष-रजतनाणकानि, अमूल्यानि वस्त्राणि, जात्यश्वं च एकं बहुमानरूपेण दत्तवान्। अनन्तरं सर्वदा तस्मै ऊन्नतस्थानं दत्त्वा सत्कारं करोति स्म।






# विषण्णकथा

कपिलवस्तुनगरतः सुदूरं गतः सिद्धार्थः स्वकीयम् उत्तरीयम्, आभरणानि खड्ग च निष्कास्य चेन्नस्य हस्ते यच्छन् उक्तवान्- "चेन्न ! भवान् मम प्रणामान् पितरं निवेदयतु । तम् एतदपि निवेदयतु यत्- "सिद्धार्थः विशाले विश्वे पदार्पणं कृतवान् अस्ति । सः समस्तप्राणिनां दुःखनिवारकः धर्मचक्रवर्ती भूत्वा कपिलवस्तुनगरं पुनरपि आगमिष्यति । सिद्धार्थनाम्नः सार्थकतासम्पादिकां सिद्धिं प्राप्तुं भवदीयः पुत्रः आशीर्वादं प्रार्थयते इति" ।

चेन्नः किमपि वक्तुम असमर्थः । तस्य मुखे निरन्तरम अश्रुधारा प्रवहति । एतत् दृष्ट्वा खेदम अनुभवन् सिद्धार्थः उक्तवान्- "चेन्न ! मातृप्रेमतः वञ्चितं मां भवान् बाल्यतः पोषितवान् । अङ्क उपवेश्य लालयन् मदीया इच्छाः सर्वाः पूरितवान् । माता इव वात्सल्यं प्रदर्शितवान् । मानवरूपेण जन्म प्राप्य व्यथाम् अनुभवन्तं मां मध्यरात्रे नगरात् बहिः सुदूरम् आनीतवान् । भवदीयम् उपकारम् अहं कथं वा विस्मरामि ? दैवयोगात् यदि मया सिद्धिः प्राप्स्येत तर्हि तत्र भवतः सहयोगः सर्वप्रथमं उल्लिख्यते । इदानीं गृहं गच्छतु भवान्" इति । चेन्नस्य स्कन्धम् आस्फालयन् सिद्धार्थः तं राजधानीं प्रतिप्रेषितवान् ।

चेन्नः किञ्चित्कालं यावत् तत्रैव स्थितवान् । तस्य मनः दुःखपीडितम आसीत् । यं राजकुमारं सः बाल्यादारभ्य लालितवान्, यस्य च बालचेष्टाः युवकव्यवहाराः च दृष्टाः, तादृशः



राजकुमारः इदानीं सर्वं त्यक्त्वा गच्छन् अस्ति ! किन्तु चेन्नः किं वा कर्तुं शक्नुयात् ? किञ्चित्-कालं तत्र स्थित्वा अनन्तरं भारभूतानि पदानि स्थापयन् सः रथसमीपम् आगतवान्।

सिद्धार्थः स्वकीयं महाप्रस्थानम् आरब्ध-वान् । शुक्रतारा उदिता । उषःकालः आसन्नः।

राजधानीं आगतः चेन्नः सिद्धार्थस्य वार्तां शुद्धोदनाय निवेदितवान्। एतत् श्रुत्वा शुद्धो-दनः मूर्च्छावस्थां गतवान् ।

यशोधरा पुत्रं राहुलं वक्षसा आलिङ्ग्य– "पुत्र ! भवान् अपि पितुः प्रस्थानं निरोद्धुं न शक्तः" इति वदन्ती रोदनं कृतवती। किञ्चित्कालानन्तरं कथञ्चित् दुःखं निगृह्य पतिदेवस्य मुखमण्डलं महापुरुषलक्षणाङ्कितं स्मरन्ती उत्थितवती । स्वपरिचर्यया श्वशुरस्य उपचारं कृतवती ।

"महाराज ! भवान् भवतः पुत्रं केवलं मानवं न चिन्तयतु। सः शाक्यवंशं पावयिष्यन्ति। भवान् यथा कपिलवस्तुराज्यस्य हितं सदा चिन्तयति, तथैव भवतः पुत्रः विशालस्य प्रपञ्चस्य हितं चिन्तयति। जगतः उद्धारार्थं सः गौतमसिद्धार्थरूपेण भूलोकम् आगतवान्, राजधानीं त्यक्त्वा गतवान् च" इति।

यशोधरायाः वचनेन शुद्धोदनः सत्यं ज्ञात-वान् इव। सः अश्रूणि मार्जयन् उत्थितवान्।

तदा यशोधरा राहुलं श्वशुरहस्ते अर्पयन्ती उक्तवती- "एषः भवतः पुत्रस्य प्रतिरूपम्" इति।

शुद्धोदनः पौत्रम् उन्नयन् पुत्रं स्मृतवान्। प्रायः एतादृशम् एव अल्पवयस्कं पुत्रं अनाथी-कृत्य तदीया माता इहलोकव्यापारं समापितवती आसीत्।

यशोधरा मनसि सङ्कल्पं कृतवती- "राहुलः सम्यक् अनुशासनपूर्वकं पालनीयः। पितुः नाम सार्थकं यथा कुर्यात् तथा वर्धनीयः। एतत् मम कर्तव्यम्" इति।

समस्तजगतः उद्धारकं तत्वम् अन्विष्यन् सिद्धार्थः अनेकानि कष्टानि सहमानः बहुषु प्रदेशेषु अटितवान्। अस्मिन् सन्दर्भे एकदा बुभुक्षया पिपासया च मूर्छां गतवान्। तदा कश्चित गोपालकः क्षीरदानपूर्वकं रक्षणं कृत–

वान्। एतेन प्रसङ्गेन सिद्धार्थः प्राणरक्षण प्रथमकर्तव्यम्' इति सत्यं ज्ञातवान्। समाजसेवा मम कर्तव्यम् इति निश्चितवान् च।

भिक्षुरूपेण देशाटनं कुर्वन् सिद्धार्थः अनेकान् साधुसन्यासिनः योगिनः अन्यान्य-मार्गानुयायिनः च दृष्टवान्। तद्द्वारा बहु ज्ञानम् अर्जितवान्। तेषां जनानां सम्पर्कतः सिद्धार्थस्य मनसि "तपोद्वारा सर्वं सिध्यति" इति भावना उत्पन्ना।

सिद्धार्थः कठोरतपसि मग्नः जातः। तस्मिन् सन्दर्भे सुजाता नाम गर्भवती तस्य समीपं गत्वा "पुत्रः उत्पन्नः चेत् एतस्य तपस्विनः पुनर्दर्शनं करिष्यामि" इति सङ्कल्पं कृतवती। तस्याः अभिलाषः पूर्णः। अतः सुजाता शिशुम् उन्नीय क्षीरफलादीनि अपि स्वीकृत्य सिद्धार्थस्य समीपं आगतवती।

सुजाता सिद्धार्थं प्रणम्य "भवतः अनुग्रहेण मया पुत्रः प्राप्तः" इति वदन्ती, सिद्धार्थेन निषिद्ध्यमाना अपि पुत्रेण तदीयपादस्पर्शं कारितवती।

तदा सिद्धार्थः उक्तवान्- "मातः! भवती यथा चिन्तयति तथा अहं न महिमान्वितः पुरुषः। येन केनापि भावेन प्रेरिता भवती क्षीरादिकं दत्तवती स्यात्। किन्तु अहं तु 'भवती दयारूपिणी' इति चिन्तयामि। भवत्याः आचरणेन अहं दयायाः महत्वं ज्ञातवान्। भवती यथा मदीयान् प्राणान रक्षितवती तथैव




प्रकृतिः कोमलकटाक्षैः सर्वान् पोषयति। भवती प्रकृतिः इव पूज्यतमा माता" इति।

"भगवन्! भवान् आत्मनः महत्वं प्रकट-यितुम् अनिच्छन् एवं वदति। भवान् महि-मान्वितः पुरुषः इति तु अहं स्पष्टं जानामि। उत्तमकुलोत्पन्नः भवान् गोपकुलीनायाः मम गृहम् आगच्छतु। सामान्यगृहिण्याः मम आतिथ्यं स्वीकरोतु। मदीयं पुत्रम् आशिषा अनुगृह्णातु" इति प्रार्थितवती सुजाता।

"अम्ब! अहं सत्यं वदामि- मम तपः अद्यापि न पूर्णम्। इदानीम् अपि अहं इतर इव कश्चित् सामान्यः। मानवेषु परस्परभेदः अनुचितः। उच्चनीचभावना कदापि न प्रदर्शनीया। सर्वजीवेषु यथा प्राणशक्तिः



अभिन्ना तथा मानवता अपि अभिन्ना एव। यदा मम तपः सफलं भविष्यति, तदा अहम् अन्यान् आशिषा अनुग्रहीतुम् अर्हः भविष्यामि। तदा निश्चयेन भवत्याः अतिथिः भविष्यामि'' इति सान्त्वनवचनानि उक्तवान् सिद्धार्थः।

''एतत् आश्वासनं कदापि न विस्मर्तव्यम्'' इति पुनः पुनः वदन्ती सा सिद्धार्थं पुनः नमस्कृत्य, तदीयचरणयोः स्पर्शं पुत्रेण पुनः कारयित्वा ततः निर्गता।

क्रमशः तपःकर्मणि सिद्धार्थस्य विश्वासः न्यूनः जातः। तपसि लीनाः बहवः स्वार्थ-साधकाः आसन्। तेषु कोऽपि मानवहितं विश्वहितं वा न चिन्तयति। तपः नाम शरीर-कष्टदायकम् आत्महत्यासदृशम् इति सः चिन्तित-वान्। अतः तपः त्यक्तुं निश्चितवान्। एतत् ज्ञात्वा बहवः साधकाः उपहासं कृतवन्तः। ''गौतमः भ्रष्टः जातः'' इति प्रचारं कृतवन्तः।

बहवः साधकाः अद्भुतशक्तिं सम्पाद्य, इन्द्रजालादिकं प्रदर्शयन्तः जनान् आकर्षन्तः आसन्। वस्तुतः एतैः मानवकल्याणार्थं किमपि साहाय्यं न आचरितम्। अज्ञाने अन्ध-विश्वासे च निमग्नानां जनानाम् उद्धारार्थं कोऽपि प्रयत्नः केनाऽपि न कृतः।

महाराजान् प्रलोभनया वञ्चयन्तः एते यज्ञ-यागादीनां व्याजेन मांसाहारिणः सन्तः सज्जनान् अपि मार्गभ्रष्टान् कुर्वन्ति स्म।

एतत्सर्वं सगम्भीरं चिन्तयन् सिद्धार्थः स्वकर्तव्यं पुनः पुनः स्मरन् एकस्य विशालस्य अश्वत्थवृक्षस्य अधः उपविष्टः आसीत्। तथैव अन्तर्मुखे तस्मिन् ज्ञानोदयः अभवत्।

तद्दिनं वैशाखपूर्णिमा। सकलकलासहितः चन्द्रः आकाशे विराजते स्म। तदा एव गौतमेन बुद्धत्वम् प्राप्तम्। परिपूर्णबुद्धरूपेण सः मानसिकविकासं प्राप्तवान्।

सिद्धार्थः ज्ञानोदयेन अनिर्वचनीयम् अनु-भवं प्राप्तवान्। एतां ध्यानावस्थाम् एव सः परमनिर्वाणम् चिन्तितवान्।

ततः आरभ्य वैशाखपूर्णिमा बुद्धपूर्णिमानाम्ना जनप्रिया जाता। अश्वत्थवृक्षः बोधिवृक्षरूपेण पूज्यः जातः। गौतमः बोधिसत्वनाम्ना

विख्यातः ।

जगति मानवः स्वबुद्धिमत्तया एव श्रेष्ठतां प्राप्तवान् । बुद्धिविकासकारणतः मानवः आत्मनः उद्धारं साधयन् परेषाम् उद्धारम् अपि कर्तुं शक्नोति । अहिंसया एव मानवः उत्तम-मानवः भूत्वा बुद्धत्वं प्राप्नोति । इन्द्रियनिग्रह-पूर्वकं रागद्वेषादीन् दूरीकृत्य सुखदुःखादिभिः पृथग्भूय सः बुद्धत्वपदम् अधिरोहति । यथा एकः दीपः अन्यदीपं ज्वालयन् लोकं प्रकाश-यति, तथैव एकः बुद्धत्वं प्राप्य जगतः अन्धकारं निवारयितुं शक्नोति । अतः सर्वैः कामनाः दूरीकरणीयाः । रागद्वेषादयः निग्रह-णीयाः । सुखानि दुःखानि च समभावेन द्रष्टव्यानि ।

जगतः उद्धारः नाम एतत् सामान्यं कार्यं न । एकेन द्वाभ्यां वा एतत् कार्यं कर्तुम् अपि न शक्यते । व्यापकतया एतत् कार्यं यथा प्रच-लेत् तथा कोऽपि प्रयत्नः करणीयः । समग्रे समाजे परिवर्तनम् आनेतव्यम् ।

गौतमबुद्धः यत् ज्ञानं प्राप्तवान् तस्य प्रसारं कर्तुम् आरब्धवान् । पूर्वं यैः तस्य उपहासः कृतः आसीत् ते अपि तस्य अनुयायिनः सञ्जाताः । तस्य अनुयायिनां सङ्ख्या दिने दिने अवर्धत ।

बुद्धः जगति धर्मजागरणं कृतवान् । सामान्याः जनाः अपि तत्वं यथा जानीयुः तथा जीवनसूत्राणि प्रचारं कृतवान् ।




बुद्धस्य तत्वस्य सारं ज्ञात्वा सहस्रशः जनाः तदीयशिष्यत्वं अङ्गीकृतवन्तः । सर्वप्राधान्येन अहिंसातत्वं बोधयन् बुद्धः समग्रे देशे सञ्चारं कृतवान् । तस्मिन् सन्दर्भे मगधचक्रवर्ती बिम्बसारः बुद्धोपदेशेन प्रेरितः प्राणिबलिपूर्वकं क्रियमाणं यज्ञं स्थगितवान् । स्वकीयं मुकुटं बुद्धस्य चरणतले समर्प्य प्रजाहितार्थं बौद्धमतम् आश्रितवान् । स्वदेशे अपि बौद्ध-मतस्य अहिंसातत्वस्य च प्रसारं कृतवान् ।

बुद्धस्य उपदेशाः सिद्धान्ताः सूत्राणि च बौद्धमतस्य सारभूतानि जातानि । बुद्धानुयायिनः बौद्धाः इति विख्याताः । तैले पतितः जल-बिन्दुः इव बौद्धमतं समग्रे जगति प्रसृतम् अभवत् ।




भारतात् निर्गताः बौद्धमतप्रचारकाः विदेशेषु गत्वा बौद्धमतस्य प्रतिपादनं प्रसारं च कृतवन्तः ।

एतेन विदेशेषु अपि असङ्ख्याः जनाः बौद्धमतम् अवलम्बितवन्तः ।

बुद्धः आज्ञानान्धकारे निमग्नस्य जगतः मार्गदर्शकज्योतिः अभवत् । अहिंसायाः प्रतीकं धर्मचक्रं सञ्चालयन् शान्तिं सर्वत्र प्रसारयन् एषः धर्मचक्रवर्ती सञ्जातः ।

बुद्धः स्वजीवितकाले अन्यान्यदेशेषु बौद्धसङ्घानां स्थापनं कृतवान् । सेवाधर्मस्य प्रचारं कृतवान् । सर्वे बौद्धसन्यासिनः समाजसेवकाः सन्तः सामान्यजनानां जीवनेषु परिवर्तनम् आनीतवन्तः । सामान्यान् अपि स्नेहेन पश्यन्तः एते संस्कारप्रधानस्य शिक्षणस्य प्रसारं कृतवन्तः ।

बुद्धस्य देशाटनसन्दर्भे अनेके महाराजाः तस्य धार्मिकम् आधिपत्यम् अङ्गीकृतवन्तः । चक्रवर्तिनः स्वकीयानि मुकुटानि बुद्धस्य पदतले समर्पितवन्तः । बुद्धं चक्रवर्तिनां चक्रवर्तिनं मानयन्तः तस्य आदेशानुसारं शासनं कृतवन्तः । सर्वे राज्यपालने अहिंसां दयां च अवलम्बितवन्तः । जातिभेदम् अपरिगणयन्तः बौद्धधर्मं सर्वराज्येषु जनाः अङ्गीकृतवन्तः ।

तदीयजीवितकाले एव पण्डिताः, सामान्याः, ज्ञानिनः, राजानः, चक्रवर्तिनः च तं बुद्धं भगवतः अवतारभूतं मन्यन्ते स्म । किन्तु बुद्धः जनानाम् आराधनं न इच्छति स्म । सः सर्वदा प्रतिपादयति स्म यत्– भक्तेः आराधनायाः च अपेक्षया श्रेष्ठेन सत्कर्मणा एव मानवः निर्वाणं प्राप्तुं शक्तः भविष्यति इति ।

षड्वर्षाणाम् अनन्तरं बुद्धः कपिलवस्तु-नगरं प्रति प्रस्थितः ।

बुद्धस्य आगमनवार्ता समग्रे नगरे व्याप्ता । एतेन जनाः नवोत्साहं असीमम् आनन्दं च प्राप्तवन्तः । बुद्धस्य स्वागतार्थं सिद्धता विशेषेण आरब्धा । बुद्धस्य दर्शनं प्राप्तुं जनाः कुतूहलिनः आसन् ।

नगरे सर्वत्र तोरणानि निर्मितानि । समग्रे नगरे नवोत्साहः उत्पन्नः । जनाः अहो-

रात्रं कार्यं कुर्वन्तः नगरम् अलङ्कृतवन्तः । स्त्रियः अपि श्रमम् अविगणयन्त्यः स्वगृहस्य पुरतः रङ्गवल्लीं लिखन्त्यः नीराजनार्थं सिद्धतां कुर्वन्त्यः आसन् ।

बुद्धनाम्ना ख्यातः मदीयः पुत्रः प्रत्यागमिष्यति इति चिन्तयन् शुद्धोदनः अपि सन्तुष्टः । सः अवर्णनीये महानन्दसागरे निमग्नः ।

"अम्ब ! श्रुता वा वार्ता ? पिता आगमिष्यति । मदीयः पिता आगमिष्यति" इति राहुलः उत्साहेन मातरं निवेदितवान् । एषः राहुलः इदानीं षड्वर्षीयः बालकः ।

"आम् पुत्र ! भवदीयः पिता भिक्षुः भूत्वा अत्र आगमिष्यति । चक्रवर्तिने तस्मै अस्माभिः भिक्षा दातव्या" इति उक्तवती यशोधरा ।

"किम् ? मम पिता चक्रवर्ती वा ? अहं चक्रवर्तिनः पुत्रः वा" ?—कुतूहलेन पृष्टवान् राहुलः ।

यशोधरा उक्तवती- "आम् । सः समस्तस्य जगतः चक्रवर्ती ।"

" तर्हि एतत् भवनं, नगरं इत्यादिकं सर्वस्वम् अपि तदीयम् एव ?"

"सत्यम् । किन्तु भवदीयः पिता एतत् सर्वं न इच्छति । वैभवेन सः तृप्तिं न प्राप्तवान् । अतः सर्वं परित्यज्य सः गतवान् । तस्य आदेशानुसारम् आचरणम् एव इदानीं अस्माभिः दातव्या भिक्षा । एतत् एव इदानीं उचितम् ।"

"अम्ब ! तथैव कुर्मः वयम् । अहं पितुः आदेशं परिपालयामि । तम् अनुसरामि च । पिता येन मार्गेण गतः तम् एव मार्गम् अहम् अपि निश्चयेन अनुसरामि" इति उक्तवान् राहुलः ।

एतत् श्रुत्वा आनन्दाश्रूणि विमुञ्चन्ती यशोधरा पुत्रं प्रीत्या आलिङ्गितवती । "पुत्रः पितुः मार्गम् अनुसरति" इत्येतां वार्तां अतिरिच्य तस्याः सन्तोषजनकं किम् अन्यत् स्यात् ?





# खड्गः त्सरुः च

गजपुरं नाम राज्यम्। तत् राज्यं गजवर्मा पालयति। तस्य राज्ञः एका एव पुत्री कलावती नाम। सा प्राप्तवयस्का। अतः तस्याः विवाहार्थं राजा स्वयंवरम् आयोज्य सर्वत्र वार्ता प्रेषितवान्।

स्वयंवरार्थम् अन्यान्यदेशीयाः राजकुमाराः आगतवन्तः। कलावती पुष्पमालां हस्ते स्वीकृत्य सखीभिः सह स्वयंवरमण्डपम् आगतवती। तस्याः आगमनं सूचयितुं भेरीनादः कृतः।

तस्मिन्नेव क्षणे सभामण्डपस्य पुरतः बद्धेन गजेन एतं शब्दं श्रुत्वा भीत्या चीत्कारः कृतः। दृढशृङ्खलामपि छित्वा सः गजः मण्डपस्य अन्तः एव आगतवान्।

सभायां महान् कोलाहलः उत्पन्नः। हस्तिपकः अपि किङ्कर्तव्यतामूढः अभवत्। स्वयंवरार्थम् आगताः सर्वे राजकुमाराः अन्ये च भीत्या पलायितवन्तः।

तदा तत्रैव स्थितः कश्चित् तरुणः कलावत्याः समीपे आगच्छन्तं गजं दृष्ट्वा सिंहवत् तस्य कुम्भस्थले प्रहृतवान्। तदा शान्तः गजः तस्य तरुणस्य पुरतः सविनयं अतिष्ठत्। एवं एकस्मिन् क्षणे एव सर्वेषां भयम् अपगतम्।

तस्य तरुणस्य पराक्रमं धैर्यं च दृष्ट्वा राजा विस्मितः। सः तरुणः कः इति विचार्यमाणे आप्तसहायकस्य धीरवर्मणः पुत्रः वीरसेनः इति ज्ञातम्।

राजकुमारी कलावती स्वस्याः कण्ठे स्थितं रत्नहारम् अवमोच्य वीरसेनाय ददती एवम् उक्तवती- ''भवान् प्राणान् अपि अविगणय्य मां रक्षितवान्। अतः एतत् पारितोषिक-रूपेण स्वीकरोतु'' इति।

''मम पारितोषिकं किमर्थम्? मया केवलं कर्तव्यम् अनुष्ठितम्। एतादृशसमये यः कोऽपि

''भगिनी''

एवमेव करोति। मया विशेषेण किमपि न कृतम्'' इति विनयेन उक्त्वा वीरसेनः रत्नहारं न स्वीकृतवान्। तूष्णीं गतवान् च।

स्वयंवरकार्यक्रमः स्थगितः। पुनः आरब्धुं प्रयत्नाः प्रचलिताः।

तदा राजकुमारी पितुः समीपम् एकं शरावम्, आनीतवती। तस्मिन् शरावे खड्गद्वयम् आसीत्। तत् प्रदर्श्य पितरम् उक्तवती- ''तात! अस्मिन् खड्गद्वयम् अस्ति। तयोः भवान् यदिच्छति तत् स्वीकरोतु'' इति।

तयोः द्वयोः खड्गयोः एकस्य खड्गस्य त्सरुः वज्रखचितः। तस्य कोशः अपि सुवर्णेन कृतः। अपरस्य खड्गस्य त्सरुः सामान्यलोहयुक्तः। अपि च तस्य कोशः चर्मणा कृतः।

राजा खड्गद्वयम् अपि सम्यक् परिशील्य चर्मकोशे स्थितं खड्गमेव स्वीकृत्य 'अहं तु एतं एव खड्गम् इच्छामि' इति उक्तवान्।

''वज्रखचितत्सरुयुक्तः सुवर्णकोशे स्थितश्च खड्गः किमर्थं भवते न अरोचत'' इति पृष्टवती कलावती।

''वीरः सर्वदा खड्गस्य तीक्ष्णताम् एव परीक्षते। न तु खड्गस्य त्सरुं कोशं वा।'' इति राजा उक्तवान्।

''तर्हि मनुष्याणां सौन्दर्यम् ऐश्वर्यादिकं सर्वमपि एवमेव किल? यतः अद्य स्वयंवरमण्डपे गजस्य कोलहलः अभवत् किल? तदा सुन्दराः धनिकाः राजकुमाराः सर्वे प्राणभयेन पलायितवन्तः। वीरसेनस्तु प्राणान् अपि अविगणय्य अस्मान् सर्वान् रक्षितवान्। एतादृश- पुरुषेण सह विवाहः भविष्यति चेत् तत्र अदृष्टमेव कारणम्। एतादृशः पुरुषः अस्माकं राज्ये एव अस्ति। अतः स्वयंवरस्य आवश्यकता नास्ति इति मन्ये'' इति कलावती पितरं उक्तवती।

राजा कलावत्याः वचनेन तस्याः मनोभावं ज्ञातवान्। तस्य अपि बहु सन्तोषः अभवत्। तस्याः वचनानुसारेण वीरसेनेन सहैव कलावत्याः विवाहं महता वैभवेन कृतवान्।





# न्यायपीठम्

कुमुदपुरस्य राजा चन्दनः। चन्दनस्य अपेक्षा आसीत्- यत् न्यायनिर्णये सर्वथा शतांशाः अपि निर्दुष्टाः स्युः इति। किन्तु एतत् असम्भवम् एव असीत्। यतः न्यायनिर्णायकः मानवः किल ? अतिजागरूकता आश्रिता चेदपि प्रमादः सम्भवति एव। लब्धेन साक्ष्याधारेण किल तेन न्यायनिर्णयः करणीयः ? अतः निर्णये दोषः सर्वथा नास्ति इति कथं वक्तुं शक्यते ?

"एतादृशः दोषः निवारणीयः" इति इच्छन् चन्दनराजः अरण्यं गत्वा बहुवर्षाणि यावत्, धर्मदेवताम् उद्दिश्य तपः आचरितवान्।

चन्दनस्य तपसा धर्मदेवता सन्तुष्टा। "अपेक्षितं वरं वृणोतु" इति सा उक्तवती। तदा राजा धर्मदेवतां प्रार्थितवान्- "देवि ! मम तादृशम् एकं न्यायपीठम् अपेक्षितं यस्याः उपरि स्थितः कश्चित् असत्यं वदति चेत् सः विकाररूपं प्राप्नुयात्" इति।

धर्मदेवता तादृशम् न्यायपीठं दत्त्वा अदृश्यतां गता। राजा राजोचितगौरवं प्रदर्शयन् तत् न्यायपीठं राजधानीम् आनीय राजसभायां प्रतिष्ठापितवान्। अनन्तरं सर्वान् न्यायपीठस्य महत्वं श्रावितवान्।

किन्तु केचन न्यायपीठस्य विषये अविश्वासं प्रकटितवन्तः। परिक्षादृष्टया न्यायपीटम् आरुह्य असत्यम् उक्तवन्तः। विरूपतां प्राप्तवन्तः च। तदारभ्य सर्वेषां मनसि न्यायपीठविषये विश्वासः उत्पन्नः।

कुमुदपुरस्य चन्दनराजस्य च कीर्तिः सर्वत्र प्रसृता। सर्वे न्यायपीठस्य महिमवर्णनं कृतवन्तः। बहवः राजानः तादृशं न्यायपीठं स्वराज्ये अपि अपेक्षितवन्तः।

राज्ये सवत्र महाराजस्य चन्दनस्य गौरवम् अधिकं जातम्। प्रजाः तं न्यायदेवतायाः

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'



प्रतीकः' इति वदन्तिस्म। एतेन राजा बहु सन्तुष्टः।

"अहम् इदानीं नेत्रे निमील्य अपि निश्चिन्ततया न्यायनिर्णयं कर्तुं शक्नोमि। न्यायपीठकारणतः मम राज्ये कदापि अन्याय्यं न भविष्यति" इति राजा मन्त्रिमाण्डलिकानां पुरतः सगर्वम् उक्तवान्।

एतत् श्रुत्वा उच्चैः हसन् महामन्त्री उक्तवान्- "महाराज ! न्यायपीठविषये अन्ध–विश्वासः न उचितः। न्यायपीठम् वञ्चयित्वा कश्चित् अन्याय्यम् आचरितुं शक्नोति" इति।

एतेन राजा कुपितः। सः उक्तवान्- "एवं रीत्या न्यायपीठस्य अवमाननम् अनुचितम्। 'न्यायपीठं वञ्चयित्वा अन्याय्यम् आचरितुं शक्यते' इत्येतत् भवता दिनत्रये प्रमाणीकरणीयम्। अन्यथा भवतः शिरश्छेदं कारयिष्यामि" इति।

कुमुदपुरे एका हेमकुरङ्गी नाम सुन्दरी वेश्या आसीत्। "जगति मादृशी रूपवती अन्या कऽपि नास्ति" इति तस्याः अहङ्कारः आसीत्। एतेन सा सर्वान् अपमानयति स्म। अतः मन्त्री चिन्तितवान्- "महाराजः एषा हेमकुरङ्गी च युगपदेव शिक्षणीयौ" इति।

एवं विचिन्त्य मन्त्री सन्यासिनः वेषं धृत्वा हेमकुरङ्ग्याः भवनस्य पुरतः स्ववसतिम् उपकल्पितवान्। तत्र सः मार्गे गच्छतां जनानां धनं सुवर्णं च स्वीकृत्य तत् द्विगुणीकृत्य ददाति स्म। सन्यासिनः एतं व्यवहारं दृष्ट्वा हेमकुरङ्ग्याः मनसि अपि आशा समुत्पन्ना। एकदा रात्रौ सा स्वकीयानि सुवर्णरत्नाभरणानि सर्वाणि सन्यासिनः हस्ते समर्प्य 'एतानि द्विगुणीकृत्य ददातु' इति प्रार्थितवाती।

"श्वः प्रत्यर्पयिष्यामि" इति आश्वासनं दत्वा सः तां प्रेषितवान्। अनन्तरं तस्याः सकाशात् प्राप्तानि सुवर्णरत्नाभरणानि स्वदण्डस्य अन्तः विद्यामाने अवकाशे स्थापितवान्।

"रात्रौ सन्यासी पलायनं कुर्यात्" इति चिन्तयन्ती हेमकुरङ्गी सन्यासिनः रक्षणार्थं सेवकान् नियोचितवती। परेद्युः प्रातःकाले गत्वा सन्यासिनं द्विगुणितानि पृष्टवती।

सन्यासी आश्चर्यं प्रकटयन् उक्तवान् "भवत्याः किमपि वस्तु मम समीपे नास्ति किल!" इति।

एतेन हेमकुरङ्गी कुपिता दुःखिता च। महाराजाय एतत् व्यवहारं निवेदयितुम् इच्छन्ती सा सन्यासिनम आत्मना सह आगन्तुं उक्तवती। सन्यासी तु राजसभां प्रस्थितः।

हेमकुरङ्गयाः वचनानि श्रुत्वा महाराजः, न्यायपीठम् आरुह्य उत्तरं वक्तुम् सन्यासिनम उक्तवान्।

सन्यसी स्वहस्ते स्थितं दण्डं हेमकुरङ्गयाः हस्ते दत्त्वा न्यायपीठम् आरूढवान्, उक्तवान् च- "एतस्याः हेमकुरङ्गयाः सम्पत्तेः लेशः अपि मम समीपे नास्ति" इति। एवम् उक्त्वा सः न्यायपीठात् अवतीर्णवान्।

एतत् कठोरम् असत्यं श्रुत्वा कुपिता हेमकुरङ्गी क्रोधावेशेन दण्डं स्वहस्ते गृहीत्वा एव न्याय–पीठम् आरूढवती। "अहं मदीयानि सर्वाणि अभरणानि सन्यासिनः हस्ते दत्तवती। सः असत्यं वदति। इदानीं अपि सः तानि आभरणानि न प्रत्यर्पितवान्" इति सा उच्चैः आक्रोशनं कृतवती।

वचनसमाप्तेः समनन्तरम् एव सा विकारं रूपं प्राप्तवती। एतत् दृष्ट्वा सर्वे सभासदाः उच्चैः हसितवन्तः।

तदा मन्त्री सन्यासिवेषं परित्यज्य, राजानं सर्वं वृत्तान्तं निवेद्य उक्तवान्- "प्रभो! भवान् एव दृष्टवान् किल- न्यायपीठकारणतः सत्य-वादिनी अपि हेमकुरङ्गी कीदृशीम् अवस्थां प्राप्तवती इति?"

हेमकुरङ्गी वस्तुतः असत्यं न उक्तवती। सा न जानाति स्म यत् तस्याः हस्ते विद्यमाने दण्डे एव आभरणानि निगूहितानि सन्ति इति। वस्तुस्थितिम् उक्त्वा सा कुरूपिणी जाता।

एतेन प्रसङ्गेन महाराजः न्यायपीठविषये विरक्तिभावम् आपन्नः। अतः सः न्यायपीठं सभाभवनतः निष्कासितवान्।



## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां मार्च-८५ मासे प्रकटयिष्यामः।**





※उपरितनं चित्रद्वयं पश्यन्तु। तस्य युक्तां शीर्षिकां परस्पर-सम्बन्धि—वाक्यद्वयेन लिखित्वा जनवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/ – रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ※ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ※अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

चन्दमामा (संस्कृतम्)
७३/२ 'अक्षरम्' रङ्गारावमार्गः, शङ्करपुरम्, बेङ्गलूरु–५६०००४

---

'नवेम्बर' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम्– शशः पश्यति निसर्गचित्रम्।

द्वितीयचित्रम्– बालः पश्यति पुस्तकचित्रम्।

प्रेषकः– उदयशङ्करः, 'कलादर्शनम्', कद्रि, मङ्गलूरु (द.क)–५७५००२

---

### भवन्तः जानन्ति वा ? ( उत्तराणि )

१. रामेश्वरदेवालयः। २. तञ्जावूरस्थे बृहदीश्वरदेवालये। ३. ओरिस्साराज्ये कोनार्कदेवालये। (धर्मपादनामकः बालकः देवालयनिर्माणसमाप्तेः समनन्तरम् एव समुद्रे पतन् प्राणान् त्यक्तवान्।) ४. कोच्चिन्।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

## कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अटविकः | Forest dweller | प्रतिरूपम् | Similar |
| अनुयायी | Follower | प्रतिवेशी | Neighbour |
| अनुशासनम् | Persuation | प्रवाय | Having woven |
| अपरिविष्य | Without serving food | पाचकः | Cook |
| अभिज्ञानम् | Symbol | पूजकः | Priest |
| अयःशलाका | Iron rod | बलाकाः | Crane |
| अवकाशः | Chance | भित्तिसदृशः | Like a wall |
| आधारभूमिः | Foundation | मिष्टभक्ष्यम् | Sweet Dish |
| आप्लुतः | Dripped | मुकुटम् | Crown |
| उत्तरीयम् | Outer Garment. | यथार्थः | Fact |
| उदभूत् | Happened | यापनीयः | Should be spent |
| क्रीडनकम् | Dolls | वाग्मी | Orator |
| कूर्दितवान् | Jumped | वेमा | Loom |
| चपेटिका | Slap | व्याजः | Cause |
| जात्यश्वः | Pedigree Horse | व्याक्षेप्तव्यः | To be postponed |
| जिज्ञासुः | Curious | शकटम् | Cart |
| तटाकः | Tank | शृङ्खला | Chain |
| ततःप्रभृति | From thenon | श्वश्रूः | Mother-in-law |
| तन्तुवायः | Weaver. | शिक्षाशास्त्री | Educationist |
| त्सरुः | Hilt of sword | सङ्कुचितः | Narrow |
| निकषोपलः | Touchstone | सहसा | Suddenly |
| पटः | Cloth | सीमा | Boundary |
| पदातिः | Soldier | स्नुषा | Daughter-in-law |
| परिचर्या | Service | हस्तिपकः | Mahout |



# सः नास्ति किल ?

| | |
|---|---|
| नारायणः — हरिः ओम्, प्रसन्नः अस्ति वा ? | Hello! Is Prasanna there? |
| गोविन्दः — आगच्छतु, उपविशतु । प्रसन्नः प्रायः नास्ति । किमपि वक्तव्यम् आसीत् वा ? | Come in. Please sit down. Prasanna is probably not here. Any Message for him? |
| ना — वक्तव्यं किमपि नास्ति... अद्य आरभ्य सहाध्ययनं कुर्मः इति प्रसन्नः उक्तवान् आसीत् । अतः आगतवान् । इदीनां सः कुत्र गतवान् ? | No. He had suggested we could study together. Where has he gone? |
| गो — अहं न जानामि । यतः अहम् इदमिदानीं नगरतः आगतः । तिष्ठतु, पुत्रीं मालतीं पृच्छामि । मालति ! | I don't know. I have just returned from the city. Wait a minute. I shall find out from my daughter. Malathi. Malathi...! |
| मालती — आगता अहम्..., (बहिः आगत्य) पितः ! किमर्थम् आहूतवान् ? | Coming. Father. you called me? |
| गो — प्रसन्नः कुत्र ! तम् अन्विष्य नारायणः आगतः अस्ति । | Where is Prasanna? Narayana wants him. |
| मा — ओह्, नारायण ! प्रसन्नः अष्टवादनपर्यन्तम् अत्र एव आसीत् । इदमिदानीं बहिः गतवान् । | Oh! Narayana! Prasanna was here till 8. He went out just now. |
| ना — अहम् अष्टवादने एव आगच्छामि इति उक्तवान् आसम् । किन्तु गृहे अतिथयः आगताः सन्ति । अतः विलम्बः जातः । सः कदा प्रत्यागच्छेत् ? | I had told him I'll be coming at 8, but I had guests at home. So I was delayed. When is he likely to return? |
| मा — प्रायः अर्धघण्टानन्तरं प्रत्यागच्छेत् । | He will be back in about half an hour's time, I suppose. |
| ना — अस्तु, तर्हि श्वः अहं तं पश्यामि । | All right. I'll see him tomorrow. |
| मा — तिष्ठतु भोः । "नारायणः आगतः चेत् स्थातुं वदतु" इति उक्त्वा गतवान् सः । | No. He wanted me to ask you to wait. Please wait. |
| ना — नैव, मया शीघ्रं गन्तव्यम् एव । अतिथयः आगताः सन्ति किल ? गृहे पिता अपि नास्ति... । | No, I have to be going. I have guests as I told you. Father is also away. |
| मा — कथञ्चित् आगतः किल ? तिष्ठतु नाम । | You have come anyway. Why dont you stay for a while? |
| ना — नैव, इदानीम् अहं गच्छामि । यथाकथमपि सः श्वः विद्यालये मेलिष्यति किल ? | No, I'll go now. I'll be meeting him at the college tomorrow. |
| मा — अस्तु नाम । | Okay! |